Sri Vani Vilas Sanskrit Series.

No. 3.

# Priyadarsika




with a Commentary and Bhumika

BY

Pandit R. V. KRISHNAMACHARIAR.

(ABHINAVA BHATTA BANA.)



Srirangam:

SRI VANI VILAS PRESS.

1906.

॥ श्रीः ॥

# ॥ प्रियदर्शिका ॥

"अभिनवभट्टबाण शब्दतर्कालङ्कारविद्याभूषण" विरुदभाजा

वात्स्यचक्रवर्तिना श्रीकृष्णसूरिणा विरचितया

व्याख्यया भूमिकया च

समुपेता ।



श्रीरङ्गनगरे

श्रीवाणीविलास मुद्रायन्त्रालये

संमुद्रिता ।

१९०६.

# PREFACE.

SANSKRIT Literature boasts of three poets who are authors of three dramas each *viz.*, Kalidasa, Sri Harsha and Bhavabhuti. Of these the second is the author of Priyadarsika, Ratnavali and Nagananda. There was up to now no good edition of the first of these dramas and the only manuscripts of it available were from the Tanjore Palace library and the readings found therein were in several places inexplicable. Thanks to our friend Mr. K. Rajachariar, he procured for us a hitherto unknown old manuscript copy of this drama. Our readers will now observe considerable improvements in the readings throughout, though in two places we have only to suggest better readings,—for Udayanotsava in page 49, it would be better if it read Madanotsava and as the sixth sloka in the 3rd Act does not conform to the rules of metre and as no other readings are found in any of the manuscripts, we have suggested one ourselves in the Bhumika.

We trust the critical Sanskrit Introduction given herein will be much appreciated as was the case with the Parvati Parinaya, the first drama published in the Series. The Bhumika first traces out all the different Sri Harshas that existed in India in days of yore. Altogether five of them are found out and then is discussed the question as to who of these five Sri Harshas could have been the author of this drama. After fully considering the claims of one after another it is conclusively proved on various grounds that the author of this drama is the Sri Harsha otherwise known as Siladitya, the king of Kanyakubja who lived in the latter

part of the sixth century, who was the son of Prabhakara-Vardhana, and the younger brother of Rajyavardhana, who was the patron of Bana, Mayura and others, who, though a great Saiva himself, was in no way prejudiced against other forms of religion and who has been highly spoken of by the Chinese traveller Hioun Thsang.* Now comes another question. Almost all the scholars allege that some court poets of Sri Harsha wrote these plays and gave them out to the world in the name of their patron. Before considering this, there is another difficulty. Scholars do not agree who that court poet was who actually wrote these. Some say it was Dhavaka while others drag in Bana of Kadambari fame. The Bhumika will clearly convince the readers that this could not have been the case and that a great poet as he was, Sri Harsha himself could have written these. In the midst of this discussion, the Bhumika digresses into replying to the arguments of Mr. M. Krishnamacharya M.A., B.L. controverting our conclusions arrived at in the Introduction to our Paryati Parinaya. As this is the second drama published in our Series, this opportunity is availed of for this reply though it is not quite relevant to this drama. Our readers will, we hope, find this also interesting reading. Next comes another long discussion. Mr. T. S. Narayana Sastrigal B.A., B.L. in his elaborate introduction to Ratnavali advances the following theories *viz.*, 1. Sri Harsha was none other but the renowned Vikramarka, 2. Dhavaka, Bhasa and Ghatakarpara are different names of one and the same individual, a poet in the court of Vikramaditya, 3. Vikramaditya lived in the 6th century B. C. His arguments in favour of the first two theories are summ-

*The statement that the author of Nagananda should have been a buddhist is refuted in this connection.

'arised under six heads and examined seriatim. It is shown that his conclusions are not based on solid foundations. He has built a huge edifice with the help of the most unreliable of materials *viz.*, the memory of one of his friends. So his theories have to be read *cum grano salis.* As his third theory is not relevant to this drama we have reserved a discussion of it to our introduction to Sakuntala.§ After thus discussing in full detail the authorship and the date we now pass on to the Drama itself. Here the plot of the story is very confusing and to make it clear the summary of the story as found in this drama is given; then is given another summary, that of the story of Malavikagnimitra, as Priyadarsika (and not Ratnavali as alleged by several scholars) very closely follows Malavikagnimitra in all respects; then a third summary is given of the story of the hero as found in the Kathasaritsagara which is alleged by its author to be more or less a Sanskrit paraphrase of the Paisachi Brihatkatha* which is the original source of this drama.

It is believed that these three summaries will enable the readers to understand the story clearly. Last but not least is traced the resemblance that exists between Malavikagnimitra and Priyadarsika—the former the work of a master-mind, while the latter though it does not bear comparison with the former, is still in the forefront of similar works. This opportunity is utilised for dwelling on the

§ Sakuntala and Uttararamacharita will soon be published in this Series.

*This original Brihatkatha is not available now anywhere. We are not able to know its true nature as the two sanskrit versions of it *viz.*, Kshemendra's Brihatkathamanjari and Somadeva's Kathasaritsagara differ in several places. Even Dandi who is supposed to have lived in the 7th century speaks of this in his Kavyadarsa as from hearsay.

merits and demerits of the important characters of the play. On the whole the Drama is much above the average.

Such, in brief, are the main points touched upon in the Bhumika and for fuller information we refer the readers to the Bhumika itself. Our thanks are due to Pandit R. V. Krishnamachariar Avl. for his able and succinct Bhumika and to the general Public for their kind reception of the Publications in this Series.

SRIRANGAM,<br>*18th Feb. 1907.*

*T. K. Balasubrahmanyam.*



॥ श्रीः ॥

# भूमिका ।

इह खलु जगति समस्तमेव लौकिकं वस्तुजातं न किल सुखेन सुचिरमवतिष्ठते । पश्यामः किल प्रतिदिनं प्रातः परिमलगुरूणि नयनहारीणि निखिललोकयात्रानिर्विकारसाक्षीणि यानि, तान्येव सरससुकुमाराणि कुसुमानि सायं पुनः संस्मरणीयशोभानि बन्धनशिथिलानि प्राप्तभूतलानि नहि नन्दयन्ति नयनमस्माकम् । तथा च भगवान्भासां निधिरखिलमपि भुवनतलमन्धतमसादासायमभिरक्षन्ननन्तरं पुनरस्तशिखरमधिरोहति । कति कति नाम तदा तदा भूमण्डलमिदमात्मना न मण्डयामासुरद्भुतदर्शनाः श्रीमन्तो धीमन्तो धीराश्शूरा उदारा उत्तमाः पुरुषाः । न खलु तत्र बहूनां संप्रति कथापि कर्णपदवीमनुपतति । तदित्थं विचित्रेऽस्मिन्संसारे, चक्रनेमिक्रमेण सुखदुःखमयेष्वतिपतत्स्वहोरात्रेषु, परिणमत्सु परश्शतेषु पदार्थेषु नास्ति वा किमपि तादृशं वस्तु ? यत्खलु वहत्सु वासरेषु, व्रजत्सु वत्सरेषु, यात्सु युगेषु, सरति संसारे, सकृदवतीर्णमप्येकरूपमधुनाप्यक्षीणमजरमकालवश्यमवतिष्ठते । अस्ति । तएव, ये किल स्रष्टारः सुखमयस्य शब्दप्रपञ्चस्य । अद्यापि हि तेषां नित्यशुद्धबुद्धस्वभावमात्मज्योतिरनन्यपरतन्त्रमविकारि सूक्तिलक्षणं सुन्दरतरमवलम्ब्य गात्रमखिलमपि

जगदिदमवभासयत्यात्मना । न खलु स्वप्रदृष्टनष्टेष्विव नियतविध्वंसिषु भौतिकेषु पिण्डेषु शरीरधियमाबध्नन्ति तादृशाः प्रबुद्धाः । परमेकान्तस्थायिना सुभाषितसौभाग्येन किल ते शरीरधर्माणो भवन्ति । नचेदमविदितमनुभवविरुद्धमतिरहस्यं वा कस्यचित्सहृदयस्य नाम सचेतनस्य । यदुत तत्तदुपज्ञमन्यादृशं सुभाषितसर्वस्वरहस्यमनन्यवृत्ति भावयतो विगलितवेद्यान्तरं स्वसंवेदैकवेद्यं रसाद्वैतमनुभवतो भावुकमणेरादिकविर्भारतकविः कालिदासः परे च सुकवयः — यैः किल स्फुरद्वाग्ब्रह्मभिरयमपगतमोहः पण्डितश्च संवृत्तः संसारः — चक्षुषोर्विषयतामुपयान्तीवेति । न केवलमेतावत् । इदं खल्वपरमाश्चर्यकर्म सुकविसूक्तिसुधारसस्य । यदयमात्मना विषयीकृतमतिक्रान्तदर्शनमपि भागधेयजन्मानं नायकमनुभवसहोदरेण केनापि भावनाप्रकर्षेण चिरजीविनमिव परिचितचरमिव च पुरस्तादस्माकमवस्थापयति। ततश्च स्तूयते । 'ज्वलदुज्ज्वलवाक्प्रसरः सरसं कुर्वन्महाकविः काव्यम् । स्फुटमाकल्पमनल्पं प्रतनोति यशः परस्यापि । तत्कारितसुरसदनप्रभृतिनि नष्टे तथाहि कालेन । न भवेन्नामापि ततो यदि न स्युः सुकवयो राज्ञाम् । ते वन्द्यास्ते महात्मानस्तेषां लोके स्थिरं यशः । यैर्निबद्धानि काव्यानि ये वा काव्येषु कीर्तिताः । येऽप्यासन्निभकुम्भशायितपदा येऽपि श्रियं लेभिरे येषामप्यवसन्पुरा युवतयो गेहेष्वहश्चन्द्रिकाः । तान्लोकोऽयमवैति लोकतिलकान्स्वप्नेऽप्यजातानिव भ्रातः सत्कविकृत्य किं स्तुतिशतैरन्धं जगत्त्वां विना ।' इति । ईदृशेष्वेव सुभाषितस्रष्टृष्वयमप्यन्यतमः श्रीहर्षो नाम सुकविः । अनेन हि महाकविना प्रियदर्शिका, रत्नावली, नागानन्दं चेति रूपकत्रयमुप-

निबद्धामित्यवगम्यते। यतः प्रबन्धत्रयेऽपि प्रस्तावनायां 'श्रीहर्षो निपुणः कविः......' इति पद्यम् '........ नानादिग्देशागतेन राज्ञः श्रीहर्षस्य पादपद्मोपजीविना ........' इति वाक्यं चैकरीतिकमुपलभ्यते। तथा च 'व्यक्तिर्व्यञ्जनधातुना ........' इत्यादीनि कानि चन पद्यान्यपि प्रकृतकविना तत्तत्प्रकरणानुगुणं द्वयोस्त्रिषु वा रूपकेषु संयोजितानि समालक्ष्यन्ते। भूयिष्ठं खल्वयमाचारो महाकविप्रबन्धेषु परिदृश्यते। यदेकत्र योजितस्य स्वाभिमतस्य शब्दस्य वाक्यस्य पद्यस्य वा यथावस्थितस्य यदि वा तत्तत्प्रकरणानुगुण्येन किंचित्परिवर्तितस्य परत्रापि प्रवेशनं नाम। यथा 'स्वर्गाभिष्यन्दवमनं कृत्वेवोपनिवेशिता।' 'अपवाद इवोत्सर्गं व्यावर्तयितुमीश्वरः।' इति रघुवंशः। 'स्वर्गा........ वेशितम्।' 'अपवादैरिवोत्सर्गाः कृतव्यावृत्तयः परैः।' इति कुमारसंभवः। एवमेव 'व्यतिषजति पदार्थान् ......' इत्यादिकानि बहूनि पद्यानि भवभूतिरूपकेषु तुल्यमुपलभ्यन्ते। तदेवं त्रयाणामपि दृश्यकाव्यानां कर्तृत्वेनावगम्यमानः कोऽसौ श्रीहर्ष इति सांप्रतं विचारयामः।

प्रवृत्ते ह्येतस्मिन्विचारे प्रथमतोऽस्माकं बुद्धिपथमधिरोहति श्रीमान्नैषधीयचरितकर्ता श्रीहर्षः; यस्य मातरपितरौ मामल्लदेवी श्रीहीरौ। अन्यश्चायमवगम्यते श्रीहर्षः, यः काव्यप्रदीपकर्तुर्गोविन्दठकुरस्य कनीयान्भ्राता। तथा च प्रदीपावसाने पठ्यते। 'ज्येष्ठे सर्वगुणैः कनीयसि वयोमात्रेण पात्रे धियां गात्रेण स्मरगर्वखर्वनपरे निष्ठाप्रतिष्ठाश्रये। श्रीहर्षे त्रिदिवं गते मयि मनोहीने च कः शोधयेदत्राशुद्धमहो महत्सु विधिना भारोऽयमारोपितः।' इति। नचेमौ श्रीह-

र्षौ प्रकृतरूपकस्य कर्तारौ भवितुमर्हतः। यतश्चैतावुभावपि न राजानौ। प्रकृतरूपकत्रयकर्ता श्रीहर्षस्तु राजेति सुव्यक्तमेव प्रस्तावनया। किं च प्रथमस्तावच्छ्रीहर्षो नैषधीयचरिते तत्र तत्र सर्गसमाप्तौ स्मरति स्वकृतानि स्थैर्यविचारणाप्रकरणादीनि ग्रन्थान्तराणि। नहि तत्र प्रकृतेषु रूपकेषु त्रिष्वन्यतममप्यात्मना नामतो निर्दिशति। तथा च परिहृतमेतयोः प्रकृतरूपकत्रयकर्तृत्वम्। अथ राजसु कोऽसौ श्रीहर्ष इति विचारयितुं व्यवस्यामः। स हि कश्चिच्छ्रूयते राजा श्रीहर्षदेवो नाम। यः सातवाहनवंशजातः कलशराजसूनुः परमविदुष्या अनन्तराजमहिष्या सूर्यवत्या नप्ता; यस्याश्च चित्तविनोदहेतोः कविना सोमदेवेन कथासरित्सागरः संग्रथितः। तथा सुप्रसिद्धधारानगराधिपतिश्रीभोजराजस्य पितामहोऽपि कश्चिच्छ्रीहर्षदेव आसीत्। राजानावेतावुभावपि नास्य रूपकत्रयस्य कर्तारौ। यतः प्रथमः क्रिस्तीयसंवत्सरेषु द्वादशशताब्द्याः पूर्वभागे कश्मीरानरक्षदिति ज्ञायते। द्वितीयेनापि दशमशताब्द्या आदिमे भागे समुत्पन्नेन भाव्यम्। मुञ्जपिता ह्ययम्। भोजपितृव्यो मुञ्जश्च दशमशताब्द्या मध्यमे भागे समुत्पन्न इति सुव्यक्तमिदम्। प्रकृतरूपकत्रयं तु मुञ्जराजसदसि लब्धप्रतिष्ठेन धनिकेन दशरूपावलोके बहुश उदाहृतमस्ति। तथा क्रिस्तुसंवत्सरीयाष्टमशतकमध्यभागसमुत्पन्नेन जयापीडमन्त्रिणा दामोदरगुप्तेनापि स्वकीये कुट्टनीमते नाटिकानुसारेण रत्नावलीकथा विस्तरेणोपवर्णिता दृश्यते। संयोजितं च तत्र प्रसङ्गतः 'उदयनगान्तरितमियम्....' इति रत्नावलीस्थं

१. दृश्यतां प्राचीनलेखमालायां. ४८- लेखः। २. दृश्यतां राजतरङ्गिणीसमाप्तिभागः। ३. दृश्यतां राजतरङ्गिणीचतुर्थतरङ्गः।

पद्यमपि । 'आश्लिष्टसन्धिबन्धं सत्पात्रसुवर्णयोजितं सुतराम् । निपुणपरीक्षकदृष्टं राजति रत्नावलीरत्नम् ।' इति कुट्टनीमतगतं पद्यमपि विषयीकरोत्येव नाटिकाम् । तथा चाष्टमशताब्दीमध्यभागात्पूर्वमेव रत्नावलीकर्तुः श्रीहर्षस्य विद्यमानत्वावश्यकतया ततः परस्ताज्जातयोः प्रकृतयोः श्रीहर्षयोर्नास्त्येतत्कर्तृत्वावसरः । इदमपि कारणं पूर्वोक्तयोरराज्ञोः श्रीहर्षयोरेतद्रूपकत्रयकर्तृत्वाभावे । यतस्तयोरपि प्रथमः क्रिस्तुवत्सरीयद्वादशशतके, द्वितीयश्च क्रिस्ताब्दीयपञ्चदशशतकोत्तरभागे समुत्पन्नः । एतेन तृतीयश्रीहर्षमेतत्कर्तारं निर्द्धारयन् विल्सन्महाशयो विगलितो वेदितव्यः । अथैवमेतयोरप्येतत्कर्तृत्वाभावे निश्चिते, स्वयमेव समवरोहत्येतत्कर्तृत्वं श्रीमति कान्यकुब्जाधीश्वरे हर्षवर्धने ; यः किल बाणभट्टेन स्थिरशरीरतां प्रापितः । संभाव्यते चास्यैव कृती रूपकत्रयमिति । यतोऽसौ विद्वत्पक्षपाती स्वयमभिज्ञो बाणमयूरादीनां महाकवीनामाश्रयभूतश्चासीदित्यवगम्यते । क्रिस्तुसंवत्सरसप्तमशतकादिमभागे भारतवर्षमिदमागतवता चीनाभिजनेन ह्यौन् त्साङ् नाम्ना यात्रिकेण स्वकीये यात्राचरितपुस्तके 'श्रीमानयं हर्षवर्द्धनो बुद्धमतासिद्धान्ते नितरां पक्षपात्यपि न सिद्धान्तान्तरेषु द्वेषबुद्धिमबध्नात् । सममेव सर्वेऽपि ब्राह्मणा बौद्धाश्च विद्वांसः संमानिता अनेन ।' इति प्रत्यपादयत् । अत एव च सर्वमतसमरसेनानेन महाकविना नागानन्दे नाटके बौद्धमतसारसर्वस्वभूतः सर्वजीवदया नाम धर्मः प्राधान्यं प्रापित इति वदन्ति । वयं तु नास्य हर्षवर्धनस्य बौद्धमतपक्षपातित्वे प्रमाणं नाम किमप्युपलभामहे । न हि कश्चिद्बौद्धो नाम भूत्वा शिवं विष्णुं वा रूपकान्तरयोर्नान्दीपद्यैर्जातुचिदपि

स्तुवीत। स हि परममाहेश्वरः। चीनयात्रिकेण तु तस्य मतान्तरप्रद्वेषाभावं सर्वभूतदयां च विलोक्य स्वकीयाशंसानुरोधेन तथा भ्रान्तं स्यात्। तथा हि पूर्वमकबर्चक्रवर्ती तत्तत्समयगुरुभिः स्वस्वपक्षपातित्वेन संभावित इति श्रूयते। क्रिस्तुवत्सरीयसप्तमशतकेऽपि बौद्धमतनिर्मूलनबद्धश्रद्धा राजानो यद्यप्यवर्तन्त। तथाप्ययं सर्वत्र सामरस्यमावहदित्येतदेव चीनयात्रिकस्य भ्रान्तौ निदानं स्यादिति संभाव्यते। यतस्तेनैव यात्रिकेण स्वकीयग्रन्थे मिहिरकुलो नाम काश्मीरिको राजा बौद्धमतविलोपनोद्युक्त इति विलिखितं वर्तते। नापि नागानन्दनाटकं तस्य बौद्धत्वमवगमयितुमलम्। तत्र हि मुख्यतया प्रतिपिपादयिषितोऽर्थो भूतदया नाम। न ह्ययं धर्मो ब्राह्मणानामनभिमतो न वा न विदितः। 'अहिंसा परमो धर्मः' इति हि वचनमभियुक्तानां बौद्धेतरेषामप्यभिमतं प्रमाणमेव। 'न हिंस्यात्सर्वा भूतानि' इति प्रमाणशतमूर्द्धन्या भगवती श्रुतिरेव हि विधत्ते सर्वभूतदयामहिंसां च। अध्वरेषु खल्वाचर्यमाणः पश्वालम्भो न मात्रयापि हिंसा भवतीति प्रमाणपरतन्त्राणां परमः सिद्धान्तः[1]। लोकैकदृष्टिना बुद्धेन तु तत्रापि हिंसात्वमालोचयता बहुशो निवारितं पशुविशसनमिति जानीमः। अस्तु नामेदं। नह्येतावता अहिंसा नाम बौद्धानामेव परमो धर्म इति युज्यते प्रत्यवस्थातुम्। नागानन्दे संवर्णितं सर्पमारणं त्वनध्वरीया काचिदतिजुगुप्सिता हिंसैवेति नेदमार्याणामबौद्धानामपि कदाचिदभिमतं भविष्यति। बहवः किल पुरा हि पुराणेष्वनुश्रूयन्ते चिरस्य पूर्वे पुण्यपुरुषाः, ये परपरित्राणाय तृणमिव प्राणानात्मीयानाकलयन्ति स्म। बुद्धदेवो हि नव-

१. दृश्यतां श्रीरामानुजीयं ब्रह्मसूत्रभाष्यम्।

मोऽयमवतारो भगवतः श्रियःपतेरिति तत्स्तुतिरार्यस्य बौद्धेतरस्यापि युज्यत एव। तथा च भगवान् बुद्धदेवो दशावतारस्तुतावभिष्टुतः श्रीशंकराचार्यैः। गच्छता च कालेन परस्तात्तद्गन्धमप्यसहमानैरविशालदृष्टिभिरभिमानिभिरार्यैर्बलादेव तत्स्थाने बलरामोऽयमायोजित इत्यन्यदेतत्। किंच नहि नागानन्दं प्रबोधचन्द्रोदयादिवत् प्राधान्येन किमपि मततत्त्वं निरूपयितुं प्रवृत्तमिति व्यक्तमेव विमर्शकानाम्। एवं नाम निरूप्यमाणे नियतं नान्दीगतं बुद्धवर्णनमपि न प्रभवति परमार्थतो बौद्धत्वं साधयितुं हर्षवर्धनस्य। नायकस्य तत्र तत्र बोधिसत्वांशतोक्तिस्तु मूलभूतबृहत्कथानुसारेणेति न तत्रापि प्रत्याशावकाशः। सर्वभूतहितैकतानमनसा परममाहेश्वरेणापि मतान्तरेष्वद्वेषमावहता ब्राह्मणान्बौद्धांश्च सममेव संभावयता बुद्धदेवस्तुतावप्यबौद्धत्वमभिमन्यमानेन लोकतन्त्रनिपुणेन श्रीमता हर्षवर्द्धनेन स्वाभिमताभिप्रायानुगुणे जीमूतवाहनचरिते प्रबन्धत उपनिबध्यमाने मूलग्रन्थानुसारेण सूच्यसूचनसौकर्येण च प्रथमतो बुद्धदेवः प्रस्तुतो नान्द्यामिति नेदं कृतधियामविदितं किमप्यतिदूरं रहस्यम्। नागानन्दे च परिदृश्यमानं गौरीपूजनादिवर्णनमपि नियतमबौद्धत्वमवस्थापयति प्रबन्धुरिति को हि नाम न जानातु कृतमतिः। मूलग्रन्थानुसारेण तथोक्तमिति नेदं साधकमिति यद्याक्षेपः, तर्हि स्वाभिमते विषये परैरुद्धुष्यमाणा प्रतिबन्दी कथं नाम वार्येतामिति सावहिति समालोचयतु साहसिकः। वयं तु रूपकान्तरयोः परिदृश्यमानं परमशिवादिवर्णनं भवत्यस्मन्मतस्य बलवदुपष्टम्भकमिति वदामः। सत्त्वोत्तरो वीराग्रणीरतिदयालुरयं हि हर्षवर्द्धनः स्वा-

१. दृश्यतां कथासरित्सागरे 'प्राप जातिस्मरं पुत्रं बोधिसत्त्वांशसंभवम्।'

नुमानेन वीरं करुणं च रसं विवरिषुरपि 'शृङ्गार एव मधुरः पर-प्रह्लादनो रसः। तन्मयं काव्यमाश्रित्य माधुर्यं प्रतितिष्ठति। शृङ्गारी चेत्कविः काव्ये जातं रसमयं जगत्।' इत्यभियुक्तोक्तिमनुस्मरन् वीरोपस्कृतं करुणशबलितं च शृङ्गारं पुरस्कृत्य क्रमेण नाटिकाद्वयं नाटकं च रुचिरतरमुपनिबबन्ध। दृश्यते हि द्वयोरपि नाटिकयोरवसाने विजयवृत्तान्तविन्यासो विरचितः। नाटकेऽप्यादित आरभ्यैव विषयविरक्तिः सर्वभूतदया च सममेव समाप्तिपर्यन्तं संयोजिते। सत्येवं वस्तुतत्त्वे भूतार्थमजानतां बौद्धसिद्धान्तपरत्वं नागानन्दस्याभिमन्यमानानामदूरदर्शिनां केषां चन 'नागानन्दरत्नावल्योः कर्ता न खल्वेक एव।' इति निर्द्धारणमनादरणीयमेव। अयं च श्रीहर्षवर्द्धनः परममाहेश्वरोऽपि परमसौगतस्य ज्येष्ठभ्रातुः श्रीमतो राज्यवर्द्धनस्यार्हणायै, स्वस्य सौगतमतेऽपि प्रद्वेषाभावदर्शनाय च नागानन्दं नाम नाटकं निर्मितवानित्यपि सुवचमिति नागानन्दस्य बौद्धसिद्धान्तप्रतिपादनपरत्वाङ्गीकारेऽपि न तत्कर्तुर्बौद्धत्वावश्यकता; नाप्यनया प्रणालिकया रत्नावलीकर्तुर्नागानन्दनिर्मातुश्च परस्परं भिन्नत्वसिद्धिः। इदं च पुरस्तात्कुर्मश्चारितपरिशीलिनां नयनयोः। यत्खलु दानपत्रं श्रीमतो हर्षवर्द्धनस्य।

'स्वस्ति[1] महानौहस्त्यश्वजयस्कन्धावारात् ........ परमादित्यभक्तः परमभट्टारकमहाराजाधिराज**प्रभाकरवर्द्धनः**, तस्य पुत्रः ........ श्रीयशोमत्यामुत्पन्नः **परमसौगतः** सुगत इव परहितैकरतः परमभट्टारकमहाराजाधिराज**श्रीराज्यवर्द्धनः**, राजानो युधि........ प्राणानुज्झितवानरातिभवने सत्यानुरोधेन यः। तस्यानुजस्तत्पादानु-

---

१. आर्कियलाजिकल्सर्वे आफ् इण्डिया ७२, ७३.

ध्यातः **परममाहेश्वरः** महेश्वर इव सर्वसत्वानुकम्पी परमभट्टारक-महाराजाधिराजश्रीहर्षः श्रावस्तीभुक्तौ ............... अपि च, कर्मणा मनसा वाचा कर्तव्यं प्राणिने हितम् । हर्षेणैतत्समाख्यातं धर्मार्जनमनुत्तमम् ।...... संवत् २० + ५ मार्गशीर्षवदि ६ ।

'अयमस्य (भास्करवर्मणः) च शैशवादारभ्य संकल्पः स्थेयान्स्थाणुपदारविन्दद्वयादृते नाहमन्यं नमस्कुर्यामिति । ईदृशश्चायं मनोरथस्त्रिभुवनदुर्लभस्त्रयाणामन्यतमेन संपद्यते, सकलभुवनविजयेन वा मृत्युना वा यदि वा प्रचण्डप्रतापज्वलनदिग्दाहेन जगत्येकवीरेण देवोपमेन मित्रेण ।' इति हर्षचरितवाक्यमपि श्रीहर्षस्य शैवत्वमवगमयितुमलमिति मन्यामहे । न खलु कश्चित्सर्वमतसमरसोऽपि बौद्धो नाम भूत्वा, एवं प्रतिजानानमन्यमात्मनः सुहृदमङ्गीकरिष्यति । एवं च सर्वतो विमृश्यमाने परमादित्यभक्तस्य प्रभाकरवर्द्धनस्य पुत्रः, परमसौगतस्य राज्यवर्द्धनस्य कनीयान्भ्राता, वीर्येण विद्वत्पोषणेन च विक्रमार्कसमप्रभावः, बाणमयूरादीनां महाकवीनां पोषयिता परममाहेश्वरोऽपि मतान्तरेष्वपि सौमनस्यमजहत्, चीनयात्रिकेण बहुधा वर्णितमहिमा, क्रिस्तुवत्सरीय षष्ठशतकान्तिमभागे समुत्पन्नः, कान्यकुब्जाधीश्वरः शीलादित्यापरनामा, मन्यामहे, श्रीमान् हर्षवर्द्धन एवास्य कर्ता रूपकत्रयस्येति ।

अथेदानीमत्र विषये चिरादनुवर्तमानमभिप्रायमालोडयामः । एवं किल प्रवादः । यदुत धावको नाम कविरात्मना विरचय्य

१. अयं संवत्सरः श्रीहर्षराज्यारम्भकालतो ज्ञेयः । श्रीहर्षराज्यारम्भकालस्तु ६०६ मितः क्रिस्ताब्दः । अतोऽस्य दानपत्रस्य कालः ६३१ क्रिस्तु वर्षः ।

२. दृश्यतां हर्षचरिते सप्तमोच्छ्वासः ।

रूपकत्रयमर्थाशया श्रीहर्षाय व्यक्रीणात् । अतो रूपकत्रयेऽपि प्रस्तावनायां निर्मातृत्वेन प्रतिपादितोऽपि श्रीहर्षो न वस्तुतः कर्तेति। तथा च 'काव्यं यशसेऽर्थकृते' इति कारिकाव्याख्यानावसरे 'कालिदासादेरिव यशः । श्रीहर्षादेर्धावकादीनामिव धनम् ।' इति मम्मटभट्टो व्यलिखत् । व्याख्यातं चेदं वाक्यं महेश्वरेण 'श्रीहर्षो राजा । धावको रत्नावलीकारः । तेन राजनाम्ना रत्नावलीकाव्यं कृत्वा धनं लब्धम् ।' इति । काव्यप्रदीपप्रभाकारोऽपि 'श्रीहर्षाख्यस्य राज्ञो नाम्ना रत्नावलीनाटिकां कृत्वा धावकाख्यकविर्बहु धनं लेभ इति प्रसिद्धम् ।' इत्याह । अपरेऽपि काव्यप्रकाशव्याख्यातार एवमेवाभिप्रयन्ति । डाक्टरुपाधिको हाल्महाशयस्तु स्वसंपादिते कस्मिंश्चन काव्यप्रकाशपुस्तके 'श्रीहर्षादेर्बाणादीनामिव धनम् ।' इति वाक्यं पश्यति । लिखति च 'रत्नावल्यां दृश्यते हर्षचरितस्य— यत्किल बाणनिर्मितमिति निर्विवादम्—पद्यमेकम् ।' इति । कवल्महोदयस्त्वेतदभिप्रायमनुमन्यमानोऽपि नागानन्दरत्नावल्योर्भिन्नभिन्नं मततत्त्वमुत्प्रेक्ष्य नैकस्तयोः कर्तेत्यभिमन्यते । श्रीमान् रमेशदत्तमहाशयोऽपि रत्नावलीं परं प्रायेण बाणभट्टलिखितामेव मन्यते । मेग्डानल् महाशयश्च 'रत्नावली प्रायो बाणभट्टेनैव विरचिता स्यात्, यः पार्वतीपरिणयं नाम नाटकमपि चकार ।' इति विलिखति । श्रीमान् दुर्गाप्रसादपण्डितोऽपि 'बाणभट्ट एव स्वप्रभोः श्रीहर्षस्य नाम्ना रत्नावल्यादिग्रन्थान्कृतवानिति काश्मीरकाः । पठन्ति च श्रीहर्षादेर्बाणादीनामिव धनमिति । ........ अन्यदेशपुस्तकपाठापेक्षया काश्मीरपुस्तकस्थपाठस्य किंचिदधिकं प्रामाण्यम्, काव्यप्रकाशकर्तू राजानकमम्मटस्य काश्मीरदेशोत्पन्नत्वात् ।' इति विलिखति ।

अत्र परे प्रत्यवतिष्ठन्ते । डाक्टरुपाधिकस्य हाल्महाशय-स्यैकमेव पुस्तकं—यदेतावतापि बहिरनवतीर्णम्—महत्यस्मिन्विवादे न प्रमाणीभवितुमर्हति । दुर्गाप्रसादपण्डितेनापि हाल्महाशयस्याभिप्रायमनुसृत्य यद्वा तदीयं पुस्तकमेकमभिवीक्ष्य कदाचिदेवं विलिखितं स्यात् । बहूनि हि काव्यप्रकाशस्यादर्शपुस्तकानि विलोकितानि न तथा पाठमभिदर्शयन्ति । आस्तां वा काश्मीरिकेषु कतिपयेषु पुस्तकेषु तथा पाठदर्शनम् । न हि तावतापि श्रद्धेयं नाम तत् । अयं खलु चिरादनुवर्तमानः पन्थाः, यदनतिप्रसिद्धे कवयितरि तत्तत्प्रबन्धस्य तदीययोग्यतानुसारेण प्रसिद्धकविशिरसि बलात्पातनं नाम । एतदेव हि, मन्यामहे, कारणमेवं विलिखतोर्दत्तमहाशयमेग्डानल्महोदारयोः स्यादिति । यदपि हाल्महाशयेन रत्नावलीहर्षचरितयोरेकमेव पद्यं दृष्टम्, तदपि ग्रन्थावुभावपि सुनिपुणमक्षरतोऽपि परीक्षमाणानां नास्माकं नयनसरणिमधितिष्ठति । इदं तावत् दृश्यते । यत्किल "द्वीपोपगीतगुणमपि...." इति पद्यं हर्षचरिते, "द्वीपादन्यस्मात्...." इति पद्यं च रत्नावल्यामेकमेव द्वीपपदं पुरस्कृत्य विरचितमिति । नह्येतावता तयोः पद्ययोरेकत्वम्, उतवा शब्दार्थाभ्यामेकरीतिकत्वं वक्तुं पुनर्युज्यते विमर्शकस्य । न चाप्येवमाचक्षाणो हाल्महाशयस्तदनुसारिणो दत्तप्रभृतयो वा रत्नावलीतो हर्षचरिताद्वा कारणं किमप्यान्तरमाविर्भावयन्ति स्म । बहवः किल पण्डिताः कवयश्च श्रीहर्षेण पोषिता इति लिखति चीनयात्रिकः । कुतो नु तेषामन्यतमेन मास्म भावि धावककविना ? एतादृशो धावकः कथंकारमनुल्लिखितः स्वयात्राप्रबन्धे चीनेनेति यदि पृच्छ्यते, तर्हि बाणेऽपि सैव पृच्छा समापतिष्यति ।

किं च न खलु बाणस्य तादृशी लक्ष्यते दुरवस्था, यया सोऽयमात्मनः कृतीरन्यस्मै विक्रीणातु[1]। स किल गर्भेश्वरमात्मानं हर्षचरिते वर्णयति[2]। अपि च यस्य हि महीयान्बहुमानः कालिदासे, स एव बाणः कालिदासीयं मालविकाग्निमित्रमापादचूडमपहृत्य स्वनाम्ना किंचन रूपकमुदश्वयामासेत्यत्यन्तमसंभाव्यमिदम्। छाया किल मालविकाग्निमित्रस्य रत्नावली प्रियदर्शिका च। किं च "सन्ति श्वान इवासंख्या जातिभाजो गृहे गृहे। उत्पादका न बहवः कवयः शरभा इव। अन्यवर्णपरावृत्त्या बन्धचिह्ननिगूहनैः। अनाख्यातः सतां मध्ये कविश्चौरो विभाव्यते।" इत्येवं परमुखप्रेक्षित्वं परिहसन्नयमेव बाणः सर्वात्मना मालविकाग्निमित्रीयेण काव्यार्थचौरः कथं नाम शक्यः कथयितुम्। अपि च यदि बाण एव विक्रेता, तर्हि कुतस्तेन कादम्बरी हर्षचरितं वा न विक्रीतम्; येन पुनरधिकमवाप्स्येत धनम्। किं च न तावान् निरर्गलः शब्दप्रपञ्चः, न तावती रसविलासितिः, न तावत्कल्पना शिल्पम्, नापि तावद्बन्धसौकुमार्यम्—यान्यहमहमिकया पुरस्तादाविर्भवन्ति बाणस्य हर्षचरितादिषु—नात्र रूपकेष्वनुभूयते। येन वयमभ्युपगच्छामः कृतीरिमा बाणभट्टस्य। "बाणस्य हि वाक्यरीतिर्न नैसर्गिकी। रत्नावल्यादिषु च दृश्यमाना सेयमकृत्रिमा।" इति केषां चन वचनं तु न परामर्शमूलमित्युपरिष्टादुदाहरिष्यामः। "रूपकनिर्माणे स्वस्यानैपुणमभिदर्शितमेव येन बाणेन पार्वतीपरिणयनाटकतः, सोऽयमेतेषां रुचिरतराणां निर्माता रूपकाणामितीदं

---

१. "सत्स्वपि पितृपितामहोपात्तेषु ब्राह्मणजनोचितेषु विभवेषु"

२. दृश्यतां हर्षचरितारम्भे 'निर्गतासु...... जायते।' इति पद्यम्।

**सर्वथा व्याहतमेव।" इति तु न समीचीनम्। यतो न पार्वतीपरिणयस्य कर्ता प्रसिद्धो भट्टबाणः। परमन्य एव कश्चिद्वामनो बाणः। यथा चैतत्तथा विस्तरेण निरूपितमस्माभिः पार्वतीपरिणयभूमिकायाम्।**

पार्वतीपरिणये रसपुष्टिर्वर्णनानैपुणं वा—यद्बाणस्य प्रबन्धान्तरे परिदृश्यते—नास्ति। अलङ्कारग्रन्थेषु अन्यत्र वा कुत्राप्यासाहित्यदर्पणमस्य पार्वतीपरिणयस्य नाम न समुपलभ्यते। अत्रापादचूडं कुमारसंभवः शब्दतोऽर्थतश्चानुकृतः। नाटकोचितं न किमपि घटनादिकं दृश्यते। इत्येवं तत्र विस्तरेण निरूपितम्। अत्र कश्चिन्नव्यशिक्षितो विलिखत्येवम्। 'यदि पार्वतीपरिणयनाटकं न समीचीनम्, तर्हि प्राचीनबाणभट्टस्य कृतिस्तदिति वाद एव प्रबलीभवति। यतोऽस्य पद्यकविता न साधीयसीति निर्विवादम्। दृश्यन्तां हर्षचरितीयानि पद्यानि। किंच भिन्नैव हि रीतिर्दृश्यकाव्यस्य श्रव्यकाव्यस्य च। अतः कादम्बर्यादिवत्पार्वती न वर्णितेत्येतदपि पार्वतीपरिणयस्य दृश्यकाव्यत्वादुपपद्यत एव। न खलु दीर्घैः पदैर्वाक्यैर्वा क्रियमाणा महती वर्णना गद्यकाव्यस्येव नाटकस्य समुचिता। इयमेव च गमनिका शब्दप्रवाहादिष्वपीति नायं भेदः कार्यकरः। निर्विवादं तत्कृतित्वेनाभ्युपगते शृङ्गारतिलकभाणे स्वकपोलकल्पितं सुबहु वर्णयन्वामनभट्टबाणो नास्य नाटकस्य निर्माता भवितुमर्हति। पार्वतीपरिणये हि न किमप्यस्ति स्वोल्लिखितं विना सर्वात्मना कुमारसंभवानुकरणात्। नापि बाणभट्टस्य रूपकनिर्माणे कौतुकं नास्तीति युज्यते वक्तुम्। यतोऽनेनैव निर्मितं मुकुटताडितकं नाम नाटकमित्यवगम्यते। अतश्चरित्रसंबन्धिसाक्षिसिद्धेः प्राक् चिरादनुवर्तमानः पार्वतीपरिणयस्य प्राचीनबाणकर्तृकत्वप्रवादो न खल्वश्रद्धेयः।' इति।

अयं तावदिदं प्रष्टव्यः। "बाणस्य पद्यकविता न साधीयसी" इत्यस्य कोऽभिप्रायः? रसपुष्टिः कल्पनाशिल्पादिकं नास्तीति वा, अक्लेशेन विवक्षितार्थसमर्पणसमर्थानि प्रसन्नानि पदानि न सन्तीति वा विवक्षितम्।

आद्यः कल्पस्तु न संभवति । न हि विमर्शकः सूक्ष्ममतिः कश्चिदपि बाणभट्टस्य हर्षचरितीयेष्वपि पद्येषु नास्ति रसपुष्टिरर्थगाम्भीर्यं कल्पनाचातुर्यं चेति कदाचिदपि संगिरेत । न खलु कश्चिच्चिराय कृतविद्यः, मन्यामहे, यां कामप्यविमर्शकोक्तिं प्रमाणयन्नसङ्गीतकमेव नृत्यन् श्रद्धाजडो भवति । यदि च न सन्ति ललितानि झटित्यर्थबोधनपर्याप्तान्यक्लिष्टानि पदानीत्येव तस्यार्थ इति द्वितीयः पक्षः, तर्ह्येतदेव भूषणं भवति; नास्माकं दूषणम् । यतो वयं निर्जीवितमपि रसचर्वणाविधुरमपि पार्वतीपरिणये पदलालित्यं परमभ्युपगच्छामः, वदामश्च पार्वतीपरिणयस्य न प्राचीनो बाणः कर्तेति । वस्तुतस्तु बाणस्य पद्यकविता कीदृशीति चण्डीशतकमेव प्रदर्शयिष्यतीति न वयमप्राप्तावसरमिदमिदानीमालोचयामः । इदं च न वयं नैव जानीमः, यद्विभिन्नैव गमनिका दृश्यश्रव्ययोः काव्ययोरिति । परंत्वेतन्न जानीमः, यदुत श्रव्यकाव्यापेक्षया तद्वद्वा दृश्यकाव्ये रसपरिपोषो न परां भूमिमारोपयितव्य इति; दीर्घसमासभूयिष्ठैः पदैर्महत्या वर्णनया वर्ण्यमानमेव वस्तु वर्णितं भविष्यतीति च कोऽपि नियमः कल्पितः साहित्यलाक्षणिकैरिति । पृच्छामः, रघुवंशकुमारसंभवादिश्रव्यकाव्यापेक्षया तद्वद्वा शाकुन्तलादिषु रसः परिपोषपथं न प्रापित इति, अदीर्घैः पदैः परिमितयापि वर्णनाप्रणालिकया कादम्बर्यादिवत्संपूर्णं ततोऽप्यधिकतरं वा न वर्णिता दृश्यकाव्ये शकुन्तला ऊर्वशी चेति वा प्रत्यवस्थातुं सचेतनः को नु खलु सहृदयः पुरस्ताद्वल्गिष्यति भावुकमणीनाम् । यथा च पश्यामः, तथा परिमितैरेव पदैर्वाक्यैर्वा संकुचितयैव वर्णनया शक्यत एव संपूर्णं वर्णयितुं दृश्यकाव्येऽपि तत्तद्वस्तूनि । यतश्च नैवं पार्वतीपरिणये, तत एव वदामः 'न खलु रसमयकाव्यलोकप्रजापतेर्वर्णनाशिल्पकारस्य प्राचो भट्टबाणस्य सृष्टिरिदं पार्वतीपरिणयं नाम नाटकम् । ' इति । तथा चैवं सर्वमस्मदीयमाशयमजानानस्य कस्य चन नव्यशिक्षितस्य "यदि कादम्बरीवत् न सम्यग्वर्णिता पार्वती, तर्हि नायमपराधो बाणस्य । परं तु दृश्यश्रव्यकाव्ययोः स्वभाव एवात्रापराध्नोति । " इत्यादिलेखनं न मात्रयापि विमर्शं सहत इति विषी-

दामः । "यदपि वामनीयं शृङ्गारभूषणं दृश्यकाव्यं स्वकपोलकल्पितवर्णना-बहुलं समीचीनं च । पार्वतीपरिणयं तु न तथेति नास्य वामनः कर्ता ।" इति । अत्रापीदमभिधातुमभिलषामः । अस्माभिरपि बहुशो नव्यशिक्षिते-नेव परिशीलितमेव शृङ्गारभूषणम् । न वयं तत्र तादृशमन्यैरनुल्लिखितं कल्पनाचातुर्यं किमपि पश्यामः, यन्नाम नव्यशिक्षितस्य नयनपथमव-तीर्णम् । भाणे हि लक्षणानुरोधेन कविसंप्रदायानुसारेण च देवनकुक्कुटयुद्धा-दीनि वर्ण्यन्त इति स्थितमेतत् । यादृशं च शृङ्गारभूषणे पदलालित्यम्, तादृशमेव पार्वतीपरिणयेऽपीति तु वयं पश्यामः । वस्तुतस्तु वामनीयोऽयं भाणः शब्दतोऽर्थतो वर्णनातश्च वसन्ततिलकभाणमुपजीवतीति सकृदुभय-मपि परिशील्यतां नव्यशिक्षितेनेति वदामः । अथवा नव्यशिक्षित एवायं प्रदर्शयतु तत्र किमपि कविकपोलकल्पितं वर्णनाशिल्पम् । तदे-तत्परैरनुल्लिखितं वा, उतवा नेति परस्तात्परामृक्ष्यामः । अस्तु वा भाणे परैरनुल्लिखितं वर्णनाचातुर्यम्, अस्तु च तेन वामनबाणः सरसकविकुल-चूडामणिः, मास्तु नाम तावता वामनबाणस्य कृतिः पार्वतीपरिणयं नाट-कम् । किं नश्छिन्नमेतावता । न खलु वयमियं कृतिर्वामनस्यैवेति सिद्धान्त-यितुमेकान्ततो व्यसनिनो भवामः । परं तु नेदं नाटकं प्राचो भट्टबाणस्ये-त्येव निरूपयितुं संरभामहे । तदेतदभिहितपूर्वैर्निर्व्यूढमेव हेतुभिरित्यस्ति नो बलवानाश्वासः । अथवान्विष्यतां चरितलेखकेनैव कश्चिद्बाणः यो वत्स-वंशजातः ; यस्य च पार्वतीपरिणयमासाहित्यदर्पणमलंकारप्रस्थानेन केनाप्य-नाघ्रातम् । येन वयमपि सुखासिकामनुभवामः । वयं तु वत्सवंशजातम-भिनवबाणबिरुदधारिणं क्रिस्ताब्दीयपञ्चदशशतके स्थितं वामनं पार्वती-परिणयभूमिकायां संक्षिप्तं प्रदर्शितैस्तदीयैरेव प्रबन्धैरवगच्छन्तः, बहु-श्रुतस्य विश्वतोमुखवैदुष्यस्य सांप्रतं स्मरणीयदशामनुप्राप्तस्य श्रीरामपारशव-स्य द्वाविंशतेर्वत्सरेभ्यः पूर्वं विज्ञानचिन्तामणिपत्रिकायां प्रकटीकृतम् "वाम-नाचार्यमहाकवेः कृतिषु ...... पार्वतीपरिणयनाटके " इति लेखनं प्रमाण-यन्तः, कदाचित्तद्दृष्टे आदर्शपुस्तके वामनाचार्यकृतिरिति विलिखितं स्यादि-

ति संभावयन्तः, पार्वतीपरिणयं नाटकं वामनबाणकृतिरिति तद्भूमिकाया पूर्वमलिखाम। मुकुटताडितकनाटकमपि बाणस्य वा परस्य वेति महानेव संशयः। यतः कश्चिद्विमर्शको मुकुटताडितकं भासस्य कृतिरिति विलिखति। नलचम्पूव्याख्याने गुणविनयगणिना मुकुटताडितके बाणीयत्वेन "आशाः प्रोज्झित..........." इति पद्यमुदाहृतमिति विलिखति पीटर्सन् महाशयः। न वयं जानीमः केनापि लब्धमामूलान्तमिदं नाटकमिति। येन शक्यावबोधो बाणस्य रूपकनिर्माणाध्यवसायः। अस्तु वा बाणस्तावदस्य कर्ता। तावता प्रकृते किमायातम्। पार्वतीपरिणयस्य बाणकृतितां वदता नव्यशिक्षितेन मुकुटताडितकेन सह पार्वतीपरिणयस्य संवादो हि प्रदर्शनीयः। वयमप्यभ्युपगमिष्याम एव तदा मुकुटताडितकस्य प्राचीनबाणकृतिताम्, यदि तादृशी योग्यता तस्य स्यात्; यया तदिदं नाटकं सर्वात्मना महाकविकृतिव्यपदेशमर्हति। यदि च मुकुटताडितकस्य पार्वतीपरिणयस्य च विद्येत सुविप्रकृष्टस्तरतमभावः शब्दार्थादिषु, तदा मुकुटताडितकस्य गृह्णता नामधेयं किंनाम साधितं स्वाभिमतमिति नव्यशिक्षितः स्वयमेव विमृशतु। दर्शयतु वा तयोः संवादम्। किं च नास्माभिरेतावत्सु गणरात्रेषु तादृशं किमपि चरितपुस्तकमुपलब्धम्, यत्रान्यूनानतिरिक्तं प्राचां सर्वेषामपि कवीनां तद्ग्रन्थानां वा वर्णनं केन चिदाचरितम्। अतो न वयमत्र चरित्रसंबन्धि साक्षि दातुं प्रभवामः। यदि च स्वेन तादृशं किमप्यवलोकितं पुस्तकम्, तर्हि तस्मादुद्धृत्य प्रदर्श्य प्रमाणं सिद्धान्तयतु प्रत्यवस्थातैव पार्वतीपरिणयस्य बाणीयताम्। यदि च तत्र तत्र तैस्तैर्ग्रन्थकर्तृभिस्तेषां तेषां कवीनां प्रबन्धानां च निर्देश एव चरित्रसंबन्धि साक्षि इत्यभिमन्यते, तर्हि तत एव वदामो न पार्वतीपरिणयं बाणस्येति। यतो बाणस्य हर्षचरितं कादम्बरी चण्डीशतकं च प्राग्भिरालंकारिकैरन्यैश्च तत्र तत्र बहुशः समुद्धृतमस्ति; नास्ति च पार्वतीपरिणयस्य नामाप्यासाहित्यदर्पणम्। नियतमयमेव हेतुरस्माकं प्रसरति मुकुटताडितकेऽपि। विनयगणिवचनं तु तदा विचारसहम्, यदि तस्याप्तत्वं जीवितसमयश्च स्थिरं निश्चीयेत। ननु

चैवं वामनकृतिः पार्वतीपरिणयमिति कुत्र तावदुल्लिखितम् । न कुत्रापि । अतो न नूतनोऽयमभिप्रायो माननीय इति प्रतिबन्दी तु नोन्मिषति । यतोऽयं वामनबाणः साहित्यकृदपेक्षयाप्यर्वाचीनः । तदेवमापादचूडमखिलमपि नव्यशिक्षितस्य लेखनं बहुधा विलुलितं विशीर्णमिति सांप्रतं किंचिदन्यदाविष्कुर्मः । परममाहेश्वरः प्राचीनबाणो हि हर्षचरिते कादम्बर्यां वा तत्तदाश्रमवर्णनावसरे परत्र वा न खलु शृङ्गग्राहिकया क्वचिदप्यद्वैतमद्वैतिनो वा स्मरति । पार्वतीपरिणयस्थं च "तस्य पुनरचिन्तनीयमनवधिकानन्दसुन्दरमनादिनिधनमनञ्जनमगुणमक्रियमात्मानमबाह्येन चक्षुषा साक्षात्कुर्वतः समुपसंहृताखिलद्वैतकल्पनाविकल्पस्य" इति वाक्यमद्वैतसिद्धान्तस्य कीदृशं दशाविशेषमवबोधयतीति, कथं च कविरयमद्वैततत्त्वमाविष्करोतीति च विमृशतः, विश्वसिमः, नियतमेव प्रतिभास्यति मनसि भावुकस्य पार्वतीपरिणयं न प्राचो बाणस्य कृतिरिति । अत एव खलु कविरयमद्वैताचार्यस्य विद्यारण्यगुरोरन्तेवासी स्यादिति पार्वतीपरिणयभूमिकायां प्रकटितमस्माभिः । इदं चास्माकं मनसि वर्तते । यन्नायमस्मदुपक्रममभिप्रायः । बहवः किल पूर्वमेवात्र समशेरत । तथा चासन्नदशवत्सरेभ्यः पूर्वं निर्णयसागरयन्त्रालयाद्बहिरवतारिते पार्वतीपरिणये मुद्रापयित्रा पार्वतीपरिणयं बाणकृतं नेति केचन मन्यन्त इति लिखितम् । तादृशाभिप्रायानुसारिष्वस्माभिरप्यन्यतमीभूय यथामति विमृश्य तत्र संपादिताः कियन्तश्चन हेतवो विमर्शकानां हस्ते समर्पिताः । यद्येतैर्हेतुभिः सोऽयमभिप्रायः पुरस्तादेकं वापि सोपानमारोहति, यद्वारुरुक्षति; तावतैव तर्हि वयमिमे कृतार्थतामात्मपारिश्रमस्य संपूर्णेन मनसा समाकलयामः । इदं च मित्रगोष्ठीपत्रिकास्थं वाक्यजातमधः प्रदर्श्य संरम्भादस्मात्सांप्रतं विरमामः । "इतः पूर्वं पार्वतीपरिणयकर्तृत्वं कादम्बरीकारे प्राचीने बाणभट्ट एव समारोप्यमाणमासीत् । इच्छन्तोऽपि तदन्यथयितुं पुरावृत्तविदः प्रमाणाभावात् न तथा कर्तुमेतावन्तं कालं प्राभवन् । परःसहस्राः साधुवादा एतस्मा अस्माक "मभिनवबाणभट्टाय" विद्वद्धौरेयाय श्रीमते श्रीकृष्णसूरिमहोदयाय । यदेष कादम्बरीकर्तुः प्राचीनस्य

बाणभट्टस्य शिरसः पार्वतीपरिणयकर्तृत्वभारमवरोप्य दृढतरैः प्रमाणैरपरमप्येकं बाणमाविष्कृत्य एतस्य च पार्वतीपरिणयकर्तृत्वं सुष्ठुतरं प्रत्यपादयत् ।"

वस्तुतस्तु सर्वस्याप्यस्य कोलाहलस्य काव्यप्रकाशव्याख्यातार एव, संभाव्यते, मूलमिति । नहि मम्मटेन पुस्तकं क्रीत्वा श्रीहर्षेण धनं दत्तमित्यभिहितम् । न खल्वस्ति किमपि विनिगमकम्, येन राज्ञा दत्तं धनं नाटिकामूल्यमेव; न तु पारितोषिकमिति निर्णेष्यामः । महाकविषु पक्षपातिना हि श्रीहर्षेण तत्तत्कविवैदुष्यपराधीनेन समुपढौकितं धनमित्येव युक्तमभिधातुम् । तथा च भवतु धावको वा बाणो वा प्रतिग्रहीता । भवतु च हालमहाशयपाठस्य काश्मीरिकपाठस्य च प्रामाण्यम् । न किल तावता किमपि गतमुतवा समागतम् । न खलु बाणो बाणसधर्मा वा मनस्वी कश्चित्कदाचिदप्यात्मकृतिमन्यस्मै विक्रेष्यति । नापि श्रीहर्षस्तत्सदृशो वा महाशयो नृपतिरपरकृतिमात्मीयत्वेन प्रकटयितुमसंकोचमात्मसात्करिष्यति क्रयेण । बाणाय हि श्रीहर्षेण प्रादायि बहुशः पारितोषिकतया प्रभूतं धनं तदीयपाण्डित्यगौरवेणेत्येव समुचितमवगम्यते । तथा हि सारसमुच्चये । 'हेम्नो भारशतानि वा मदमुचां बृन्दानि वा दन्तिनां श्रीहर्षेण समर्पितानि कवये बाणाय कुत्राद्य तत् । या बाणेन तु तस्य सूक्तिनिकरैरुट्टङ्किताः कीर्तयस्ताः कल्पप्रलयेऽपि यान्ति न मनाङ्मन्ये परिम्लानताम् ।' इति । एतेन ह्यवगम्यते श्रीहर्षो हर्षचरितप्रबन्धपरितोषी प्रादाद्बाणाय प्रभूतां संपत्तिमिति । इदं च 'हालेनोत्तमपूजया कविवृषः श्रीपालितो लालितः ख्यातिं कामपि कालिदासकवयो नीताः शकारातिना । श्रीहर्षो विततार गद्यकवये बाणाय वाणीफलं सद्यः

सत्क्रिययाभिनन्दमपि च श्रीहारवर्षोऽग्रहीत्।' इति रामचरितमहाकाव्यस्थं पद्यमाभिहितपूर्वमभिप्रायमेव बलवदुपष्टम्भयति। बाणः स्वयमेव हर्षचरिते प्रस्तौत्येवमात्मानम्। "…. पृथिवीपतिः प्रसादवानभूत्। अविशच्च पुनरपि नरपतिभवनम्। स्वल्पैरेव चाहोभिः परमप्रीतेन प्रसादजन्मनो मानस्य प्रेम्णो विस्रम्भस्य द्रविणस्य नर्मणः प्रभावस्य च परां कोटिमानीयत नरेन्द्रेण।' इति। इत्थं च काव्यप्रकाशे "श्रीहर्षादेर्बाणादीनामिव धनम्।" इति पाठसत्त्वेऽपि न हाल्दत्तमहाशयादिभिरूहितोऽर्थो जातुचिदपि सेत्स्यति। किं च प्रियदर्शिका रत्नावली नागानन्दं चेति रूपकत्रयमपि प्रस्तावनायां श्रीहर्षकृतत्वेन प्रस्तूयते। सत्येवं धावकाद्रत्नावलीं परं श्रीहर्षेण क्रीतामभिलिखन्तः काव्यप्रकाशव्याख्यातारः किं नाम मन्यन्त इति न वयं जानीमः। यद्यन्ये रूपके निर्मातुं शक्नोति श्रीहर्षः, कुतस्तर्हि न पर्याप्नोतु रत्नावलीमप्यात्मना संग्रथितुम्? न खलु भारते वर्षे पूर्वतरो राजलोको विद्याविमुखो विवेकविधुरो वा समयाकरोति स्म। श्रूयते हि वाक्पतिराजादीनां पोषयिता श्रीमान् यशोवर्मा स्वयं कविः काव्यस्य रामाभ्युदयस्य। सुप्रसिद्धः कविर्भोजराजः केन वा विस्मर्यताम्। शूद्रकश्च राजा कथंकारमस्माकं पुरःस्फूर्तिको न भवतु। तथा बालबृहस्पतिबिरुदस्यापि पात्राणि पूर्वं नृपतय आसन्निति ज्ञायते राजतरङ्गिण्याम्[१]। एवमन्येऽपि[२] बहवो नृपतयः साहित्यसंनिकृष्टाः पूर्वमासन्। तस्मान्नेदमसंभाव्यम्, यद्रूपकत्रयमपि श्रीहर्षेण राज्ञैव स्वयं संग्रथितमिति।

---

१. दृश्यतां राजतरङ्गिणी ध्वनिलोचनं औचित्यविचारचर्चा च।

२. दृश्यतां श्रीकण्ठचरितसमाप्तिभागः औचित्यविचारचर्चादिकं च।

काव्यप्रकाशव्याख्यातारस्तु न खल्वीदृशे महति विषये सर्वात्मना श्रद्धेयवचना भवन्ति । ते खल्वत्र विषये परमैककण्ठ्यमावहन्तोऽपि कविकाव्यादिषु बहुधा परस्परं प्रसिद्धविपरीतं च विसंवदन्त्येव। न हि सर्वत्र यथार्थदर्शिनमात्मानमभिप्रदर्शयन्ति ते। यथा। 'देवीभावं गमिता....' इति प्रतिवस्तूपमोदाहरणव्याख्यावसरे 'रत्नावलीं दृष्ट्वा वत्सराजस्योक्तिरियम् ।' इति कश्चित् । 'सैरन्ध्रीभावं प्राप्स्यन्तीं द्रौपदीं शोचतां पाण्डवानामियमुक्तिः ।' इत्यन्यः । तथा 'क्वाकार्यं शशलक्ष्मणः ...' इति भावशबलतोदाहरणपद्यविवरणसमये 'ऊर्वशीविरहादुन्मत्तस्य पुरूरवस उक्तिरियम् ।' इत्येकः। 'शुक्रकन्यां देवयानीं दृष्टवतो राज्ञो ययातेरियमुक्तिः ।' इत्यपरः। 'आविर्भूते शशिनि तमसा मुच्यमानेव रात्रिः....' इति सुप्रसिद्धं विक्रमोर्वशीपद्यम् 'मानवतीविषये नायकस्य परामर्शोऽयम् ।' इत्येवमर्वाचीनः कश्चिदवतारयति । तदेवं नास्ति केषांचिदर्वाचां व्याख्यातॄणां श्रद्धेयवचनत्वमिति नैतेषां संभावितं विवरणप्रमादं विश्वस्य कश्चिदर्थो युज्यते निर्द्धारयितुम् । परं तु पद्यमेकं रत्नावलीस्थमवलोकयतामस्माकमियं तावदाशङ्का स्वयमेव पुरस्सरति। यथा। अपिनाम रत्नावलीकर्ता, धावको बाणो वा सन् 'प्राप्ता कथमपि दैवात्कण्ठमनीतैव सा प्रकटरागा । रत्नावलीव कान्ता मम हस्ताद्भ्रंशिता भवता ।' इति द्वितीयाङ्कस्थराजवचनापदेशेन स्वप्रबन्धस्य विक्रयव्यतिकरेण स्वहस्तात्परिच्युतिं सूचयति? इति। अत एव च रत्नावलीदृष्टान्तप्रदर्शनमपि स्वरसतः साधु संपद्यते इति सुष्ठु युज्यते शङ्कितुम् । अथास्यामाशङ्कायामाविर्भवन्तीं समाहितिमपि न वयमनभिधातुं पारयामः ।

इयं खलु सा। यथा। यद्येवम्, कुतस्तर्हि रूपकान्तरयोर्न तथा किंचिदपि सूचितम्? निपुणं निरूपयन्तोऽपि न वयमुपलभामहे प्रियदर्शिकायां नागानन्दे वा तादृशं पद्यं वाक्यं वा। यन्नाम लेशेनापि कटाक्षयिष्यत्यमुमभिप्रायम्। त्रयाणामपीदमुपलक्षणमिति वादस्तु, शास्त्रीयेष्वेव, नत्वीदृशेषु विषयेषु शोभते। रत्नावली-प्रयोगश्च नायिकाया रत्नावलीति नामेति सूचनद्वारा तत्कथामभि-व्यञ्जयितुमुपात्तः। पूर्वार्द्धमपि, 'द्वीपादन्यस्मादपि' इत्यनेन संवदत्तच्चरितमेव क्रोडीकरोति। इयं किल महाकवीनां कापि शैली, यन्मध्ये मध्ये काव्यवस्तुनः सूचनं नाम। तथा हि कालिदासः शाकुन्तले 'आचार इत्यवहितेन...' 'स्त्रीणामशिक्षितपटुत्वम् ......' इत्यादिना तत्र तत्र नाटकवस्तु व्यञ्जयति। अधिकं तु रत्नावलीशाकुन्तलयोर्भूमिकायां निरूपयिष्यामः। तथा च त्रयाणा-मपि रूपकाणां कर्ता विद्वत्सु विशिष्य कविषु पक्षपाती स्वयमभिज्ञः कविश्च श्रीहर्षवर्द्धन एवेति युक्तमुत्पश्यामः।

अत्र श्रीमन्तो नारायणशास्त्रिणः 'रत्नावल्यादिषु प्रस्ताव-नायां प्रस्तूयमानः श्रीहर्षो न कान्यकुब्जाधीश्वरो हर्षवर्द्धनः। परं तु सुप्रसिद्धः शकारातिर्विक्रमार्क एव। धावकोऽपि तत्सदसि विख्यातो महाकविर्घटकर्पर एव। भास इत्यपि तस्यैव संज्ञा। विक्रमादित्यश्च क्रिस्तुजननात्पूर्वं षष्ठे शतके समुत्पन्नः।' इति मन्यन्ते। तेषामि-मास्तावत्प्रधानभूता वाचोयुक्तयः—

१. राजशेखरस्य कविविमर्शाख्ये ग्रन्थे "भासो रामिलसौमिलौ वररुचिः श्रीसाहसाङ्कः कविर्मेण्ठो भारविकालिदासतरलाः स्कन्धः सुबन्धुश्च यः। दण्डी बाणदिवाकरौ गणपतिः कान्तश्च रत्नाकरः सिद्धा यस्य सरस्वती

भगवती के तस्य सर्वे वयम् । कारणं तु कवित्वस्य न संपन्न कुलीनता । धावकोऽपि हि यद्भासः कवीनामग्रिमोऽभवत् । आदौ भासेन रचिता नाटिका प्रियदर्शिका । निरीर्ष्यस्य रसज्ञस्य कस्य न प्रियदर्शना । तस्य रत्नावली नूनं रत्नमालेव राजते । दशरूपककामिन्या वक्षस्यत्यन्तशोभना । नागानन्दं समालोक्य यस्य श्रीहर्षविक्रमः । अमन्दानन्दभरितः स्वसभ्यमकरोत्कविम् । उदात्तराघवं नूनमुदात्तरसगुम्भितम् । यद्वीक्ष्य भवभूत्याद्याः प्राणिन्युर्नाटकानि वै । शोकपर्यवसानास्य नवाङ्का किरणावली । माकन्दस्येव कस्यात्र प्रददाति न निर्वृतिम् । भासनाटकचक्रेऽपि छेकैः क्षिप्ते परीक्षितुम् । स्वप्नवासवदत्तस्य दाहकोऽभून्नपावकः ।" इत्येवं दृश्यते । भासो हि जात्या रजकः । अत एव धावक इति व्यपदिश्यते । स खलु महाकविः स्वकीये घटकर्पराख्ये यमकप्रबन्धे 'आलम्ब्य चाम्बु तृषितः करकोशपेयं भावानुरक्तवनितासुरतैः शपेयम् । जीयेय येन कविना यमकैः परेण तस्मै वहेयमुदकं घटकर्परेण ।' इत्येवमन्तिमेन पद्येन प्रत्यजानीत । अयं किल स्वभावः, यस्य यन्नित्यपरिचितम् ; तदेव झटिति स्मृतिपथमधिरोहतीति । अत एव धावकस्य (रजकस्य) भासस्य प्रतिज्ञासमये झटित्युपस्थितं घटकर्परेण पुनरुदकवहनम् । यतो वस्त्रनिर्णेजनाय घटकर्परेणोदकानयनं रजकस्य दैनन्दिनं कृत्यम् । आचार्यदण्डिकृतस्य कविहृदयस्य काव्यानुशासननाम्नि स्वविरचिते व्याख्याने 'कुर्युर्नः कवयः कवित्वकलमप्राचीनबीजाङ्कुरक्षेत्राणि प्रथितप्रथाः शुभमतिं श्रीभासबाणादयः । ......" इत्यारम्भप्रकरणस्थपद्येन भासे महान्तं बहुमानमाविष्कुर्वता हेमचन्द्रेण भासोऽयं घटकर्परकाव्यस्य बहूनां रूपकाणां च निर्मातेति, यमकचक्रवर्तीति चोक्त्वा "हंसपङ्क्तिरपि नाथ ......" इति पद्यमुदाहृतम् । पुनश्च हेमचन्द्रेणैव काव्यानुशासने 'संप्रति परां काष्ठामधिरूढेनापि भासेन भूतपूर्वा स्वकीया दशा न विस्मृता । यतोऽनेन पूर्वाचरितं घटकर्परेणोदकवहनमेव प्रतिज्ञातम् । प्रतिज्ञां चेमामसहमानाः परे कवयः परिहसितुमनसो विक्रमार्कसभ्यमेनं भासं तज्जातिस्मारकेन घटकर्परनाम्ना व्यवजह्रुः । क्रमेण च स

एव व्यपदेशो भासमहाकवेः सुप्रसिद्धः संपन्नः।" इति लिखितम्। धावकस्य हि भासस्य दरिद्रतया श्रीहर्षाय युज्यत एव स्वकीयरूपकविक्रयणम्। तथा च "एको हि दोषो गुणसंनिपाते निमज्जतीन्दोरिति यो बभाषे। नूनं न दृष्टं कविनापि तेन दारिद्र्यदोषो गुणराशिनाशी।" इत्यादीनि दारिद्र्योपालम्भपराणि पद्यानि भासकृतित्वेन काव्यसंग्रहे प्रकटिते नीतिसारे दृश्यमानानि नियतमुक्तपूर्वमभिप्रायमेव स्थापयन्ति।

२. भासेन हि बहूनि नाटकानि कृतानीत्यवगम्यते। "भासनाटकचक्रेऽपि......" इति राजशेखरस्य '......नाटकैर्बहुभूमिकैः...भासो देवकुलैरिव' इति बाणभट्टस्य च वचनमत्रार्थे प्रमाणम्। किं च सांप्रतं यशसा परं भूमण्डलं मण्डयतां ब्रह्मविद्यापत्राधिपानां श्रीमतां श्रीनिवासशास्त्रिणां पुस्तकशालायां भासस्य किरणावलीमुकुटताडितकोदात्तराघवानि नाम नाटकानि पूर्वं कदाचित्संगृहीतान्यासन्। स्वयं च विलोकितानि। तत्रोदात्तराघवप्रस्तावनायां भासकविरात्मानं त्रयोविंशते रूपकाणां कर्तारं प्रस्तौतीति श्रीनिवासशास्त्रिणामवरजैः श्रीमद्भिर्नारायणशास्त्रिभिरुच्यते। तत्र प्रियदर्शिकारत्नावल्यौ च नाटिके क्रमेण वत्सराजचरितमेव वर्णयत इति सुव्यक्तम्। एवं वत्सराजचरितं विवर्णयिषुणा कविना तत्र प्रधानभूतं वासवदत्तापरिणयमधिकृत्य किमपि रूपकं नियतं निर्मितं स्यादिति युज्यते संभावयितुम्। स्वप्नवासवदत्तं च—यन्नाम ध्वनिकृता भासकृतरूपकेष्वन्यतमत्वेन निर्दिष्टम्। यस्माच्च बहूनि पद्यानि ध्वन्यालोकलोचने समुदाहृतानि-तादृशं रूपकम्। "कवीनामगलद्दर्पः" इति हर्षचरिते बाणोक्तिरप्येतद्रूपकमुद्दिश्यैव स्यादिति मन्यामहे। स्वप्नवासवदत्तं तु भासकृतमिति राजशेखरवचनात् ज्ञायते। अतः सर्वतः समालोच्यमाने भासेनैव वत्सराजचरितमुपादाय स्वप्नवासवदत्तं प्रियदर्शिका रत्नावली च व्यरचीति निष्प्रयासं सिध्यति ॥

३. कालिदासोऽपि स्वसमकालिकस्य धावकस्य घटकर्परख्यातस्य विक्रमार्कसभानवरत्नेष्वन्यतमस्य भासस्य प्रियदर्शिकां रत्नावलीं च सर्वात्म-

नानुकृत्यैव मालविकाग्निमित्रं विरचयामासेति सुस्पष्टमिदं रूपकत्रयपरिशीलिनाम्। अत एव कालिदासेन विक्रमोर्वशीयशाकुन्तलयोरिव मालविकाग्निमित्रे "अपूर्वं नाटकम्" इत्यनुक्त्वा प्रस्तावनायाम् "मालविकाग्निमित्रं नाम नाटकम्" इत्येवोक्तम्। "प्रद्योतस्य प्रियदुहितरं वत्सराजोऽत्र जह्रे ......" इति मेघदूतस्थस्य कालिदासवचनस्यापि मूलं प्रायेण भासकृतं रूपकं स्यात्, अथवा भासस्यापि यन्मूलं तत्। वासदत्तापिता हि प्रद्योत इति प्रियदर्शिकारत्नावलीभ्यामेव ज्ञायते। बृहत्कथायां हि वासवदत्तापितुर्नामधेयं चण्डमहासेन इत्येव। यतो 'यथामूलं तथैव तत्' इति प्रतिज्ञाते कथासरित्सागरे सोमदेवेन वासवदत्ताया जनक उज्जयिनीपतिश्चण्डमहासेन इति, मगधाधिपतिश्च पद्मावतीपिता प्रद्योत इति कथितम्।

४. 'श्रीहर्षः' इति न हर्षवर्द्धनस्य संज्ञा। परंतु विश्वविश्रुतस्य विक्रमार्कस्यैव। तस्य हि हर्ष इत्यपरं नामधेयम्; श्रीपदं च तत्र बहुमानेन तस्यैव बिरुदतया प्रयुज्यत इति चावगम्यते [1]राजतरङ्गिण्या। न खलु बाणेनान्येन वा हर्षवर्द्धनः श्रीपदगौरवेण कुत्रापि व्यवहृतः। हर्षवर्द्धनात्पूर्वमेव सुप्रसिद्धः श्रीहर्षविक्रमादित्य आसीदिति जानानेनैव बाणेन परस्परपरिच्छेदाय युक्तमाचरितं हर्षवर्द्धनस्य 'श्री' पदमयोजयता। अयं च विक्रमार्को रामिलेन [2]स्वकीयमणिप्रभाप्रस्तावनायां "हर्षक्षोणिपतिः" इति, हर्षविक्रमार्क इति च व्यपदिष्टः।

५. रत्नावल्यां वर्णितं सिंहलेश्वरदुहितुरानयनम्, समुद्रमध्ये पोतभङ्गः, कथंचित्तस्या राजसमीपागमनम्, राज्ञस्तत्परिग्रहश्चेत्येतत्सर्वं श्रीहर्षविक्रमादित्यचरितमपि गूढं गर्भीकरोति। तथा रत्नावल्यां स्थितः शम्बरसिद्धि-

---

१. तत्रानेहस्युज्जयिन्यां श्रीमान् हर्षापराभिधः। एकच्छत्रश्चक्रवर्ती विक्रमादित्य इत्यभूत्। (३-१२५)

२. दृश्यन्तां श्रीनारायणशास्त्रिभिराङ्गलभाषया लिखितायां रत्नावलीभूमिकायां प्रदर्शितानि त्रीणि पद्यानि वाक्यमेकं च।

प्रस्तावः मकरन्दोद्यानादिकं नागानन्दे नायिकाया मलयवतीसमाख्या च विक्रमार्कमपि निभृतमनुसीव्यति । यतो विक्रमार्केण सिंहलाधीश्वरपुत्री परिणयार्थमानीता मध्येसमुद्रं पोतभङ्गेन क्लेशं गता दैवादापद्विमुक्ता पाणौ गृहीतेति, एकस्या विक्रमार्कपत्न्याश्च मलयवतीति नामधेयमिति, मकरन्दोद्यानादिकं शम्बरसिद्धिश्च तदीये इति च ज्ञायते [1]कथासरित्सागरतः । इदं च रत्नावल्यादीनां विक्रमार्काश्रितभासकृतत्वे आन्तरो हेतुः ॥

६. हर्षवर्द्धनकाले (क्रिस्ताब्दीयसप्तमशतके) नहीदृशानां सरसवर्णनानां नैसर्गिकवाक्यसौन्दर्यवतामश्लिष्टपदगुम्भनानां रूपकाणामवतारावकाशः । तदा हि साहित्यविद्या श्लेषबहुला कृत्रिमवाक्यप्रवाहा दीर्घसमाससंकटा चासीदिति सुस्पष्टमिदं तात्तत्कालिकसाहित्यविद्यादशाविपरिणामतरतमभावविमर्शिनां विदुषाम् ॥

श्रीमद्भिर्नारायणशास्त्रिभिर्विक्रमार्कजीवितकालनिर्णयेऽपि प्रदर्शिता बहवो हेतवः । परं तु तेषां साधुत्वासाधुत्वविमर्शं शाकुन्तलभूमिकायां कर्तुमभिलषाम इति न खलु तानत्र विवृणुमः । नापि कश्चिन्नव्यशिक्षित इव 'एवं सत्येतावता कालेन तैस्तैर्विमर्शकैर्निश्चितानां कविकालादीनां बहूनां विषयाणामधरोत्तरभावो विपर्यासश्च स्यात् ।' इत्येकयैव वाचा सर्वमिदमपाकृतमभिमन्यामहे । सर्वमेतदवलोकितवतामस्माकमजनि महीयान्विस्मयः । श्रीमान् दुर्गाप्रसादपण्डितो हि तत्तत्प्राचीनग्रन्थसमुच्चयसंपादनतत्प्रकाशनैकतानो बहुश्रुतो विमर्शक इति सुप्रसिद्धम् । न खलु तेनापि राजशेखरीयः कविविमर्शो विलोकितः । तेन हि कविविमर्शमनवलोकितवता सूक्तिमुक्तावल्यादिषु राजशेखरीयत्वेन विद्यमानानि प्राचीनकविप्रशंसापद्यानि समुच्चित्य कर्पूरमञ्जरीभूमिकायां प्रकटितानि ।

---

[1]. दृश्यतां विषमशीललम्बकः ।

तत्र 'उदात्तराघवं नूनम्....' इत्यादीनि पद्यानि न योजितानि। 'भासो रामिल....' इति, 'भासनाटक....' इति च पद्यद्वयमेव दृश्यते। ऊहितं च दुर्गाप्रसादेन कोऽपि राजशेखरेण प्राचीनकविप्रशंसापरः प्रबन्धो रचितः स्यादिति। तादृशादपि ग्रन्थात्कविविमर्शाच्छ्रीनारायणशास्त्रिभिरुद्धृत्य केषां चन पद्यानां प्रकाशनमारचितमिति प्रथममिदमस्माकं विस्मयस्थानम्। हेमचन्द्रस्य काव्यमालामुद्रितं काव्यानुशासनमान्तमनुशीलयतामप्यस्माकं 'कुर्युर्नः कवयः...' इति पद्यं वा, धावकघटकर्पभासानामेकत्वसाधकं वाक्यं वा, 'हंसपङ्क्तिरपि....' इति पद्यं वा, तस्य भासीयत्वेन तत्रोदाहरणं वा, भासस्य बहुनाटककर्तृत्ववचनं वा, भासं धावकं वा प्रकृत्य ग्रन्थकर्तुर्विमर्शो वा, तस्य स्वतन्त्रस्य ग्रन्थस्य कविहृदयव्याख्यानरूपत्वं वा न खलु दृष्टिपथमधिरोहतीत्यपरेयमाश्चर्यभूमिरस्माकम्। एतावतापि समयेन बहुभिरश्रुतचरमदृष्टपूर्वं च कविहृदयमाचार्यदण्डिनः कृतिरिदानीं श्रूयते। दृश्यते च तत उद्धृत्य श्रीनारायणशास्त्रिभिः प्रकटितम् 'वाल्मीकिव्यासभासप्रभृतिभिरुदितां कालिदासाद्यकाव्यैर्गुप्तां भुक्तां च बाणप्रभृतिभिरनघां साहितीसौहितीं ताम्।' इति पूर्वार्द्धमात्रम्। तथा उदात्तराघवस्य नाममात्रं साहित्यदर्पणादिषु श्रूयते। न तु कविस्तत्र निश्चीयते। संप्रति तु तस्यैव किरणावलीमुकुटताडितकयोरपि कर्ता भास इत्यवगम्यते। अयं चापरो विशेषः। यन्महाकवेः प्राचीनस्य भासस्य कृतेर्नवाङ्कायाः किरणावल्याः शोकपर्यवसायिता। अहो सुष्ठु निराकृतः सोऽयमपवादो भासेन यद्वा एवं प्रकटनेन बहूपकुर्वद्भिः श्रीनारायणशास्त्रिभिः, यदुच्यते नास्ति संस्कृतभाषायां शोकपर्यवासि रूपकम्; नास्ति चार्यावर्तनिवासिनां शोकपर्यवसा-

यिषु रूपकेष्वन्यजातीयैरास्वाद्यमानमसाधारणं रसं रसयितुं लेशे-नापि शक्तिरिति । तथा च महाकवे रामिलस्य मणिप्रभा नाम रूपकम्—यदेतावतापि न कचिदपि श्रुतम्—श्रूयते । दृश्यन्ते च ततः प्रदर्शितानि पद्यानि त्रीणीत्यन्यदिदमस्माकमद्भुतास्पदम् । तदेवं सर्वात्मना कौतुकाविष्टैरस्माभिरस्मत्सुहृद्द्वारा तत्त्वजिज्ञासार्थं प्रेषि-तस्य पत्रस्य यन्नाम श्रीनारायणशास्त्रिणां सकाशादुत्तरं कृपापत्रमा-सादितम्, तदिदमधः प्रदर्शयामः । 'कविविमर्शो न मया व्यलोकि, नाप्युदात्तराघवादीनि, न च मणिप्रभा, न वा कविहृदयम्, नैव च तद्व्याख्यानं हेमचन्द्रीयं काव्यानुशासनम् । जाने काव्यमालायां मुद्रितं काव्यानुशासनमन्यदेवेति । परं त्वाशास्यते कविहृदयव्या-ख्यानकाव्यानुशासनस्य लाभः । परं तु सर्वोऽप्ययं मया प्रदर्शितो विषयः कुम्भघोणनगरीयाणां ब्रह्मविद्यापत्राधिपश्रीनिवासशास्त्रिसह-भुवां भट्टश्रीनारायणशास्त्रिणां वचनमेकं प्रमाणीकृत्यैव प्रवृत्तः । तैश्चैत-त्सर्वममुद्रिते स्वकीये कविकनकानिकषे निरूपितमित्युच्यते । कवि-हृदयं परं काव्यमालायामुपपत्रत्वेन कदाचिन्मुद्रितमिव स्मरामि । तत्र पूर्वार्द्धं परं स्मृतिपथमारूढम्, उत्तरार्द्धं तु विस्मृतमभूत्तेषां भट्टश्री-शास्त्रिणाम् । इदमिदानीमुपलब्धं भावप्रकाशाख्यं किमपि पुस्त-कम्, यदेतावता केनापि न मुद्रापितम्; (न दृष्टं न श्रुतं चेति कुतो न ?) यत्र भासो विस्तरेण वर्णितः । यद्यपेक्ष्यते, तर्हि तत उद्धृत्य भासचरितं विलिख्य प्रेषयिष्यते ॥' इति । एतासां च वाचोयुक्ती-नां विमर्शं विस्तरेण रत्नावलीभूमिकायां चिकीर्षन्तोऽपि सांप्रतमपि किंचिदिवात्र प्रपञ्चयामः ।

---

१. आङ्गलभाषाविलिखितस्य पत्रस्य संग्रहेण सारभूतोऽयं गैर्वाणीविवर्तः

सर्वोऽप्ययं सिद्धान्तो नारायणशास्त्रिणां मूलशिथिलः सन्न-भित्तौ चित्रमिति सुव्यक्तमिदं तदीयेनैव लेखेन। इदं पुनरिदानी-मस्माकमपरमाश्चर्यस्थानम्, यत्सर्वंसहे भट्टश्रीनारायणशास्त्रिणां स्मृतिघण्टापथे हन्त कविहृदयीयपद्यस्योत्तरार्द्धं परं न संचरितु-मवकाशमलभतेति। आस्ताम्। विषयं तावद्विमृशामः। यन्नीति-सारे भासकृतत्वेन प्रकटिते दृष्टम् 'एकोहि दोषः....' इति पद्यम्, तत्सुभाषितावलौ संकीर्णवस्तुवर्णनप्रकरणे (३४३८-३४३९) 'केषामपि' इत्येवमज्ञातकर्तृकत्वेन योजितो वल्लभ-देवेन। प्रकटितानि च तत्र तत्र तेनैव 'भासस्य' इत्येवमन्यानि बहूनि पद्यानि। तन्नास्ति निश्चयो नीतिसारो भासकृत एवेति। अस्तु वा सोऽयं ग्रन्थो भासस्य। तावता किमायातम्। न हि दारिद्र्यवर्णनमात्रेण स्वयं दरिद्रेणैव भाव्यं कविना। अस्तु वा भासः परमदरिद्रः। न तावता सिद्धान्तसिद्धिः। कविविमर्शस्य कविहृदयव्याख्यानकाव्यानुशासनस्य च लाभे, तत्र कथितपूर्वाणां वचनानामुपलम्भे, तेषां च प्रामाण्ये खलु सेत्स्यतः सिद्धान्तस्य नीतिसारपद्यादीनि द्रढिमानमापादयिष्यन्ति। कामं तदा द्रढयन्तु, यदि भविष्यति तादृशः कालः। किंच न खलु घटकर्परेण जल-वहनप्रतिज्ञामात्रेण कवेः शक्यं रजकत्वमूहितुम्। यतस्तत्पदं चिरा-न्नीचकर्मणि भृत्यभावमवगमयति। यथा। 'कुम्भदासी भवेयम्।' 'घटीचेटी नोऽभूत्।' इति।

२. सन्तु बहूनि नाटकानि भासकृतानि, स्मरन्तु च भट्टश्रीनारायणशास्त्रिणः कदाचिदात्मना दृष्टानि त्रीणि नाटकानि। दृश्यतां च तत्रोदात्तराघवे भासस्य त्रयोविंशतिरूपककर्तृत्वम्। न

वयं तन्निषेधामः । परं तु स्वप्नवासवदत्तं वासवदत्तापरिणयमधिकृत्यैव निर्मितमिति कथं ज्ञायत इति परं पृच्छामः । वदामश्च न खल्वानन्दवर्द्धनाचार्यैरिदं रूपकं नामतः परिगृहीतम्[1], नाप्यभिनवगुप्तपादैरनेकशः स्वप्नवासवदत्तमुदाहृतम्, परं तु क्वचिदेवेति । स्वप्नवासवदत्तीयत्वेन नारायणशास्त्रिप्रदर्शितम् 'देवीस्वीकृतमानसस्य .... ' इति पद्यं तु तापसवत्सराजनाटकस्य[2] चतुर्थाङ्कस्थम्, न तु स्वप्नवासवदत्तीयम् । ततश्च ध्वनिलोचने धृतेन पद्येनैकेन कथं संपूर्णं वस्तु परिज्ञातुं शक्यम् । येन तस्य वासवदत्ताविवाहपरतामन्ययोश्च नाटिकयोस्तदनन्तरवत्सराजचरितपरत्वमभ्युपगम्य त्रयाणामप्येकः कर्ता स्यादिति निश्चिनुमः । किं च प्रियदर्शिका तावद्वासवदत्ताविवाहात्पूर्वमेव वत्सराजाय दित्सिता तत्पित्रा[3] । तत आरभ्यैव वत्सराजचरितं वर्णयन्नयं कविर्वासवदत्तापरिणयप्रकरणस्य क्लेशबहुलत्वात्प्राधान्येन तद्विषयकरूपकानिर्माणाविमुखः प्रियदर्शिकायां राजविदूषकसंवादेन, वासवदत्तापहरणप्रयोगव्याजेन प्रियदर्शिकासमागमोपायतया योजितेन गर्भनाटकेन च वासवदत्तापहरणपरिणयमपि प्रयोगतो लेशेन प्रदर्शयामासेति सुव्यक्तमिदं स्फुरिष्यत्येव विमर्शकस्य । अतः स्वप्नवासवदत्तस्य वासवदत्तापरिणयवर्णनपरत्वेऽपि न त्रयाणामपि रूपकाणां कर्तुरेकत्वावश्यकता । प्रत्युत विमृश्यमाने भिन्नत्वमेव सिध्यतीति मन्यामहे । 'कवीनामगलत् .... ' इति बाणोक्तिस्तु न स्वप्नवासवदत्तं विषयीकरोतीति

---

१. दृश्यतां काव्यमालामुद्रितं ध्वन्यालोकलोचनम् । (१५२)

२. दृश्यतां ध्वनिलोचनं काव्यमालामुद्रितम् । (१५१)

३. दृश्यतां प्रियदर्शिकायां चतुर्थाङ्के दृढवर्मणः संदेशः

स्पष्टमिदम् । यत इदं नाटकं 'स्वप्नवासवदत्तम्' । हर्षचरिते च 'वासवदत्ता' शब्दप्रयोगः । अधिकं तु वासवदत्ताभूमिकायां प्रदर्शयिष्यामः ।

३. यदि रत्नावल्यादीनां कर्ता भास इति निश्चितम्, तदा युज्यते कालिदासस्य मालविकाग्निमित्रं रत्नावलीं प्रियदर्शिकां चोपजीवतीति वक्तुम् । सांप्रतं तु शीलादित्यश्रीहर्षेण मालविकाग्निमित्रमेव रत्नावलीप्रियदर्शिकयोरनुकृतमिति निर्बाधं वयं वदामः। मालविकाग्निमित्रप्रस्तावनायां 'अपूर्वं नाटकम्' इत्यनुक्तिस्तु न कंचिदप्यर्थं साधयिष्यति । रूपकेषु प्रस्तावनायां परिदृश्यमानानि 'अपूर्व' 'नव' प्रभृतीनि पदानि न विशिष्य कमप्यर्थमभिसंधाय कविभिः प्रयुज्यन्ते । इतः पूर्वं बहिरनवतीर्णतामेव तत्तद्रूपकाणां तत्र तत्र प्रयुक्तानि तानि पदानि बोधयन्ति । न तु कथावस्तुनोऽप्यपूर्वताम् । अत एव हि सर्वात्मना प्रहृतपूर्वेऽपि पार्वतीपरिणयनाटके प्रस्तावनायां 'किमप्यभिनवं पार्वतीपरिणयनाटकम्' इत्युपलभ्यते। युज्यते चैतत्। अतश्च खलु कालिदासः 'अहमस्यां कालिदासग्रथितवस्तुना नवेन त्रोटकेन' इति विक्रमोर्वशीये, कालिदासग्रथितवस्तुनाभिज्ञानशाकुन्तलनामधेयेन नवेन नाटकेन' इति शाकुन्तले च प्रयुयुजे । यदि च नवपदेन वस्तुनो नवत्वमभ्यमंस्यत, तर्हि 'कालिदासग्रथितनववस्तुना नाटकेन' इत्येवं निरदेक्ष्यत्। इमं च स्वाभिप्रायं 'पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम् ।' इति व्यक्तमेव विवृण्वता कालिदासेन मालविकाग्निमित्रस्यापि नवत्वविशेषणं योजितमेवेति विभाव्यतां विमर्शकैः । उदयनकथाकोविदेभ्यो ग्रामवृद्धेभ्यः श्रुतवतो वत्सराजचरितं कालिदासस्य तदनुसृत्यैव

लिखिते मालविकाग्निमित्रे नवत्वविशेषणमनभिमतं स्यादित्यपि युज्यते समभ्यूहितुम्। किं च रत्नावल्यादीनि रूपकाणि भासीयत्वेन कथयन्तः श्रीनारायणशास्त्रिण इदं तावत्पृच्छ्यन्ते। यदुत रत्नावल्यां नागानन्दे च 'अपूर्ववस्तुरचनालंकृत' पदप्रयोगं कुर्वतो भासस्य प्रियदर्शिकायां परं तादृशपदप्रयोगाभावे किं नाम कारणमिति। वयं तु, विषवेगवर्णनादिना सर्वथा मालविकाग्निमित्रमनुकुर्वत्यां प्रियदर्शिकायामनुचितस्तथाप्रयोग इति न तथा प्रयुक्तं हर्षवर्द्धनेन ; रत्नावल्यां तु स्वकल्पितः कियानिव विद्यत एव विशेष इति ; नागानन्दे च नान्यदीयमनुकृतमिति च मन्यमानेन तथा प्रयुक्तमिति वदामः। प्रद्योतप्रियदुहितुर्वासवदत्ताया अपहरणं च कालिदासेन ग्रामवृद्धेभ्य एव मन्यामहे समाधिगतम्। न तु बृहत्कथायाः। यतो बृहत्कथाकर्ता गुणाढ्यः सातवाहनस्य सभायामासीदिति, सातवाहनश्च क्रिस्ताब्दीयप्रथमशतके पृथिवीं शशासेति ज्ञायते। कालिदासश्च क्रिस्तुजननात्पूर्वमेव समुत्पन्नः। अत एव हि कालिदासेन ग्रामवृद्धा एवोदयनकथाकोविदा उक्ताः। न हि बृहत्कथायाः सत्वे वृद्धमुखेष्वेवोदयनकथास्थितिरिति समुचितमभिधातुम्। एवं च रत्नावल्यादीनां भासकृतत्वपक्षे यद्बृहत्कथातो व्यत्यासेन वासवदत्तायाः प्रद्योतसुतात्वोक्तौ भासस्य वृद्धपरम्परा स्वेच्छा वा मूलम्, तदेव कालिदासस्यापीति ब्रूमः। कथासरित्सागरश्च सर्वथा बृहत्कथातो न व्यत्यस्यतीति वक्तुं न शक्यत इत्यप्युपरिष्टात्प्रदर्शयिष्यामः। वस्तुतस्तु 'प्रद्योतस्य प्रियदुहितरम्........' इति पद्यं प्रक्षिप्तमेवेति न काप्यनुपपत्तिः। न खलु श्रीनारायणशास्त्र्युक्तरीत्या कविकालपौर्वापर्यभिया पद्यमिदं प्रक्षिप्तमिति वयं ब्रूमः। परं तु 'इतः परं

प्रक्षिप्तमपि श्लोकत्रयं व्याख्यायते।' इति मल्लिनाथ एवात्र प्रमाण-मिति वदामः। बृहत्कथारीत्या चण्डमहासेनो वासवदत्तापिता प्रि-यदर्शिकायामपि तथैव नैव कविना नाभिहितः[1]।

४. विक्रमादित्यस्य 'हर्ष' इत्यपरं नामधेयमासीदिति वयम-प्यभ्युपगच्छामः। परं तु तस्यैव 'श्री' पदं बहुमानसूचकं बिरुदम्। हर्षवर्द्धनस्य तु न तथेत्यत्र किं नाम प्रमाणमिति पृच्छामः। 'श्रीमान् हर्षापराभिधः।' इति हि राजतरङ्गिणी। सा कथमिममर्थं साधय-तीति नैव जानीमः। बाणेन हि न केवलं हर्षवर्द्धनः, परं तु तस्य पिता प्रभाकरवर्द्धनः, ज्येष्ठो राज्यवर्द्धनश्च न खलु हर्षचरिते श्रीपदेन संभावितः। हर्षचरिते च बाणेन हर्षवर्द्धनो देवो हर्ष इत्येवोच्यते। तावता कावार्थसिद्धिः। यदि हर्षवर्द्धने परं बाणेन श्रीपदं विसृष्टं स्यात्, तर्हि नव्याभिप्रायस्य कियानिवावसरः स्यादपि। यतश्च नैवं ततश्च नास्ति तत्रापि प्रत्याशाप्रयासः। अयं च हर्षवर्द्धनः श्रीहर्ष इति बहुत्र व्यवहृतः। तथाहि प्रदर्शितपूर्वे सारसमुच्चये 'श्रीहर्षेण' इति, रामचरिते 'श्रीहर्षः' इति, हर्षवर्द्धनदानपत्रे 'श्रीहर्षः' इति च प्रयुक्तम्। तथा च राजशेखरः 'अहो प्रभावो वाग्देव्या यन्मा-तङ्गदिवाकरः। श्रीहर्षस्याभवत्सभ्यः समो बाणमयूरयोः।' इति। परिमलकालिदासश्च नवसाहसाङ्कचरिते द्वितीयसर्गे 'स चित्रवर्णवि-च्छित्तिशालिनोरवनीपतिः। श्रीहर्ष इव संघर्षं चक्रे बाणमयूरयोः।' इत्याह। किं चायं विक्रमादित्यः, स्वाभिमतावष्टम्भाय रामिलकृति-त्वेन श्रीनारायणशास्त्रिभिः प्रकटितेषु मणिप्रभाप्रस्तावनापद्येषु 'हर्ष-क्षोणिपतेः' इति,....ध्मातहर्षः स हर्षः' इत्येव व्यवहृतः। न तु

१. दृश्यतां प्रियदर्शिकायां तृतीयाङ्के कञ्चुकिनो वचनम्।

तत्रापि दृश्यते श्रीहर्ष इति श्रीहर्षविक्रमादित्य इति वा। इत्थं चान्वयव्यतिरेकाभ्यां रत्नावल्यादिप्रस्तावनायां प्रस्तूयमानः श्रीहर्षः, हर्षवर्द्धन एव न तु हर्षविक्रमार्क इति निष्प्रयासं वयमिमे वदामः।

५. सिंहलेश्वरदुहितृपरिणयो विक्रमार्कस्य संवृत्त इति सत्यमिदम्। तावता किं समुपनतम्। अयं खलु स्वभावो रूपकनिर्मातॄणाम्, यदन्यत्र स्थितस्य वस्तुनश्चमत्कारातिशयाधानाय स्वकीयनायकविषयकतया साक्षाद्वा परम्परया वा यथावस्थितं वा किंचित्परिवर्तनेन वा समायोजनं नाम स्वकीयेषु रूपकेषु। कनककटकद्वारा सहस्रानीकस्योदयनपितुः स्वप्रियाप्राप्तिरेव हि किंचित्परिवर्तनेन शाकुन्तले कालिदासेनाङ्गुलीयपुरस्कारेण समनुसृता। पुराणेषु बहुधा श्रूयमाण एव हि शापवृत्तान्तो रुचिरतरं तेनैव महाकविना शाकुन्तले विक्रमोर्वशीये च संयोजितः। तन्नेदमाश्चर्यकरमभिमतार्थसाधनक्षमं वा, यद्विक्रमादित्यचरितमनुसृत्य रत्नावल्यां नायिका कमपि प्रतियत्नमासादितेति। उद्याननामसाम्यादिकं त्वकिंचित्करम्। मलयवत्यस्तु बह्वयः श्रूयन्ते। दृश्यतां कथासरित्सागरः। नागानन्दीयमूलकथायामपि मलयवत्येव हि नायिका श्रूयते। तन्नेदमपि कार्यकारि।

६. न वयं निपुणं परीक्षमाणा अपि रत्नावल्यादिषु तादृशं शब्दतोऽर्थतो वर्णनातो रसतश्च सौष्ठवं पश्यामः, यादृशमस्तीति परैरुद्घुष्यते। येन चैतानि रूपकाणि कालिदासरूपकाणामपि मार्गदर्शीनि भविष्यन्ति। सन्त्येवैतेष्वपि श्लेषमयः प्रपञ्चः, दीर्घसमासबहुलता, कृत्रिमसौन्दर्यवती वाक्यपद्धतिश्च। 'संप्राप्तं मकरध्वजेन ........' 'विश्रान्तविग्रहकथः' 'उद्दामोत्कलिकां वि-

पाण्डुररुचम्........' 'घनबन्धनमुक्तोऽयम्....' इत्यादीनि श्लेषमयान्युपलभ्यन्त एव पद्यानि। 'महुमत्तकामिणीजणस्सअंगहग्गहिदणच्चन्तणाअरजणजणिदकोदूहलस्स' 'मलयमारुदान्दोलिदमण्डलन्तसहआरमञ्जरीरेणुपडलपडिबद्धपदविआणम्' 'खलखलाअमाणलोहसिङ्खलाबन्धपडिक्खलन्तचलणो' 'कमलगन्धगहणुद्दाममारुदपजंवबुद्धबन्धूअबन्धणस्स' 'विवाहमङ्गलमहूसवमिलिदसिद्धविज्जाहरावाणअदंसणकोदूहलेण' इत्यादीनि वाक्यानि, दीर्घसमासबहुलानि न च नैसर्गिकप्रवृत्तीनीति को नाम भावुको नाभ्युपगच्छतु। तत्रापि विशिष्य प्राकृतेष्वेवं दीर्घसमासयोजनं न खलु पुष्णाति वाक्यशोभाम्। अन्विष्यतां कालिदासीयेषु रूपकेष्वेतादृशं वाक्यखण्डम्। उपलभ्यते वा, पश्यामः। एतादृशी हि वाक्यशैली बाणस्य गद्यकाव्ये भवभूते रूपकेषु च बहुलमुपलभ्यते। श्रीहर्षसमयादनतिविप्रकृष्टो हि भवभूतिरेतादृशीमेव वाक्यशैलीमनुसरति। दृश्यतां मालतीमाधवम्। स हि कोऽपि समयः, यत्रैवं साहित्यकलायां वाक्यशैली, तत्तच्छास्त्रमात्रप्रसिद्धस्य पदस्य भूयसा प्रयोगः, तत्तच्छास्त्रसंप्रदायप्रदर्शनव्यसनिता चाभूत्। तथा च मालतीमाधवे भवभूतिः 'षडधिकदशनाडीचक्रमध्यस्थितात्मा....' इति, 'मम हि संप्रति सातिशयप्राक्तनोपलम्भसंभावितात्मनः....' इति च शास्त्रसिद्धान्तं निरूपितवान्। अतश्च किल श्रीहर्षेणापि 'स्थानप्राप्त्या दधानम्....' इति, 'व्यक्तिर्व्यञ्जनधातुना....' इति च संगीतरहस्यमाविष्कृतम्। न खल्वियं क्लिष्टा रीतिः प्रायेण दृश्यते कालिदासीयेषु रूपकेषु। 'मायूरी मदयति मार्जना' इति, 'अङ्कैरन्तर्निहितवचनैः....' इति च तदीयं वचनं तु नैतादृशमत्यन्तगूढं

किमपि शास्त्रतत्त्वं प्रकाशयतीति भावुका एव भावयन्तु। किंच नेदमपि विस्मरणमर्हति, यद्रसप्रचुराणां प्रसन्नगम्भीराणां भवभूति-रूपकाणामवतारोऽप्यनन्तरमेव श्रीहर्षसमयादिति। तथा च रत्ना-वल्यादिकं श्रीहर्षेण क्रिस्ताब्दीयसप्तमशतके विरचितमित्यभिप्रायः सर्वात्मना सुस्थ इति सिद्धम्। इदं चास्मन्मतोपष्टम्भकं बीलमहा-शयस्य वचनमुपदर्श्य विषयमेनमुपसंहरामः। 'हर्षवर्द्धनः पण्डिता-न्विशिष्य कवीन् पर्यपोषयत्। साहित्यप्रसङ्गे तैः साकं स्वयमप्यरमत। कदाचिदात्मना जीमूतवाहनबोधिसत्त्वस्य भूमिकां परिगृह्णीयात्। वाद्यविधेः संगीतकस्य चाभ्यन्तरे स्वयमेव नागायेत।' इति।

एतावता च रत्नावल्यादीनां कर्ता क इति, कश्च श्रीहर्ष इति विचारितं विस्तरेण। सांप्रतं प्रियदर्शिकां किंचित्परामृशामः। इयं हि यथा, न तथा सर्वात्मना रत्नावली समनुकरोति मालविकाग्नि-मित्रीयम्। अयमत्र कथासारः।

वत्सराजाय स्वकन्यां दित्समानो ह्यङ्गाधिपो दृढवर्मा 'मत्प्रार्थ्यमाना-प्यनेन स्वदुहिता वत्सराजाय दत्ता' इति बद्धानुशयेन 'वत्सराजो बन्धनान्न निवर्तते' इति च लब्धरन्ध्रेण कलिङ्गेन सहसागत्य बलादवस्कन्द्य गाढप्रहार-जर्जरीकृतो बद्धः। तदा च तस्मादवस्कन्दसंभ्रमात्कथंचिदपवाह्य दिष्ट्या दृष्टां प्रियदर्शिकाम् 'इदानीं न युक्तमत्र स्थातुम्। यथा कथं चिदेनां वत्सराजायोपनीय स्वामिनमनृणं करिष्यामि' इति मन्वानो दृढवर्मणः कञ्चुकी विनयवसुर्दृढवर्मणो मित्रभावान्वितस्यैवाटविकस्य विन्ध्यकेतोर्गृहे तां स्थापयित्वा स्नानाय नातिदूरमगस्त्यतीर्थं गतः। यावच्च विनयवसुः प्रतीपमागच्छति, तावत्तत्स्थानं वत्सराजप्रेषितेन सेनापतिना विजयसेनेन स्मर्तव्यतां नीतं सह विन्ध्यकेतुना। आनीता च विन्ध्यकेतोर्वेश्मनि स्थिता

1. Bhuddist Records of the Western world Vol. 1. Page 210.

'हा तात हा तात' इति कृतकृपणप्रलापा प्रियदर्शिका 'विन्ध्यकेतुदुहितेयम्' इत्यभिमन्यमानेन विजयसेनेन। वत्सराजोऽपि तामेनाम् 'भगिनीबुद्ध्या त्वयेयं सर्वदा द्रष्टव्या' इति संदिश्य देव्यै वासवदत्तायै प्रेषयामास। वासवदत्तयाप्यारण्यकाव्यपदिष्टा प्रियदर्शिका स्वाज्ञाकरीष्वन्यतमा परिगृहीता। अनन्तरं च वत्सराजोऽयमवबुद्धय दृढवर्मणो दिष्टदोषं नितान्तरुष्टो व्यसर्जयद्विजयसेनपुरःसरं दण्डचक्रमुपरि कलिङ्गहतकस्य। एवं गच्छति काले कदाचित्कमलापचयाय वासवदत्तया धारागृहोद्यानदीर्घिकां प्रहिता प्रियदर्शिका, देव्या विरहोत्कण्ठाविनोदनिमित्तं तत्रैव सविदूषकमागतेन वत्सराजेन दृष्टा। दृष्टमात्रायां च तस्यां तल्लावण्यादिविमोहितस्य बलवानभूदनुरागो वत्सराजस्य। अत्रान्तरे च मधुकरैरायास्यमाना सभयमुत्तरीयेण मुखं पिधाय स्वसखीमाह्वयन्ती प्रियदर्शिका तदा स्वसमीपमागतं वत्सराजं सखीभ्रमेण कण्ठे गृह्णाति स्म। ततश्च मुखादुत्तरीयमपनीय राजानं पश्यन्ती लज्जास्पृहाभ्यामाकुला यावद्राज्ञा समाश्वास्यते, तावदेव तत्सख्या इन्दीवरिकायाः समागमेन ससाध्वसा प्रियदर्शिका विमुच्य राजसान्निधिं सह सख्या गता वासवदत्तासकाशम्। तदा प्रभृति च प्रियदर्शिकाया वत्स राजे— यः प्रियदर्शिकया 'अयं खलु स महाराजः, यस्याहं तातेन दत्ता' इत्येवं प्रत्यभिज्ञातः— बलवानभिनिवेशः समजनि ; येन सा तदसमागमे नियतमात्मानमप्युत्स्रष्टुमभवदुद्युक्ता। एतयोश्चेममकालक्षममन्योन्यानुरागमवगम्य परस्परसमागमसंघटने कृतप्रयत्नेन राज्ञः सख्या विदूषकेण पृष्टा विदितारण्यकावृत्तान्ता च मनोरमा नाम प्रियदर्शिकायाः प्रियसखी, 'अत्र रात्रावस्माभिर्भगवत्याः सांकृत्यायन्याः कृतिरुदयनचरितं नाम नाटकं देव्याः पुरतो नर्तितव्यम्। तत्रारण्यका वासवदत्ता भविष्यति। अहमपि वत्सराजः। तच्चरितेनैव सर्वं शिक्षितव्यम्। तदागत्य स्वयमेव स्वां भूमिकां कुर्वाणः समागमोत्सवमनुभवतु महाराजः।' इति तत्रोपायमावेदयामास। तथाचैवमविकलमनुष्ठिते, निद्रापरवशेन मूर्खेण विदूषकेण सर्वोऽप्ययं वृत्तान्तः सहसा विभेदितः ; येन कुपिता वासवदत्ता राज्ञोऽनु-

नयेनाप्यप्रसन्ना सद्य एवारण्यकां बन्धने कर्तुमादिदेश। गच्छता च कियतापि कालेन स्वमात्रा प्रेषितं पत्रमेकमधिगतं वासवदत्तया, यत्र वासवदत्तामातृष्वसृभर्तुरङ्गराजस्य कलिङ्गावस्कन्दः, बलवतोऽपि वत्स-राजस्य तत्रौदासीन्यभ्रमेण विषादश्च व्यक्तीकृतः। एतत्पत्रदर्शनेन, आरण्यकावृत्तान्तव्यतिकरेण च विमनायमानां वासवदत्तां यावदाश्वासयति सांकृत्यायनी, तावद्वत्सराजेनापि देवीप्रसादनाय तत्र समुपस्थितम्। निवेदितश्चावगतदेवीवैमनस्यहेतुना राज्ञा पूर्वमेव स्वयमाचरितः कलिङ्गो-परि दण्डचक्रप्रेषणवृत्तान्तः, येन वासवदत्तायाः संतोषः समभूत्। अत्रान्तरे च निहतकलिङ्गः स्थापिताङ्गराजो विजयसेनः सहाङ्गराजकञ्चु-किना विनयवसुना समागतः। निवेदितश्च विनयवसुना दृढवर्मणः कृतज्ञ-तापरिमलः सन्देशः। अस्मिन्नेवावसरे स्वमरणमेव श्रेयो मन्यमाना विषं पीत्वा विमूर्च्छिता प्रियदर्शिका, गृहीतविषविद्येन वत्सराजेन चिकित्सयितुमा-नीता वासवदत्तासकाशम्। यदा च चिकित्सिता सा बोधमापन्ना, तदा विनयवसोः प्रियदर्शिकायाश्च परस्परप्रत्यभिज्ञानसंभाषणेन ज्ञातं वासवद-त्तया स्वभगिनीत्वमारण्यकायाः। ततश्च सर्वेष्वपि संतुष्टेष्वानन्दभरितया देव्या वासवदत्तया ससंतोषं प्रतिपादिता प्रियदर्शिका वत्सराजेन पूर्णेन मनसा प्रतिगृहीता। इति।

## अयं तावन्मालविकाग्निमित्रीयकथासंग्रहः।

'विदर्भराजो माधवसेनः प्रतिश्रुतसंबन्धःस्वभगिनीं मालविकामग्नि-मित्रसकाशं निनीषन् प्रस्थितो मध्येपथं स्वदायादेन बलाद्गृहीतो बन्धने क्षिप्तः। तस्मिंश्च ग्रहणसंप्लवे माधवसेनमन्त्रिणा कथंचिद्रक्षिता मालविका, मध्येमार्गं दस्युभिर्हते तन्मन्त्रिणि, कथंचिद्भाग्यवशादन्तपालदुर्गाधिकृतेन वीरसे-नेन धारिण्याः सकाशं प्रापिता। चित्रे च कदाचित्तां दृष्टवता साक्षाद्दिदृ-क्षुणा च राज्ञा प्रार्थितो विदूषकः कथमप्युत्पाद्य नाट्याचार्ययोर्विरोधम्, संसारनिर्विण्णाया यतिवेषधारिण्या माधवसेनमन्त्रिसहोदर्याः पण्डितकौ-

शिक्ष्याः साहाय्यकेन देव्या धारिण्या असंम्मतावपि मालविकां राज्ञा साक्षाद्दृश्यमानामकरोत् । अभूच्च परस्परमनुरागो बलवानेतयोः । विदितमालविकामनोरथया च देव्या धारिण्या डोलास्खलनेन सरुजाभ्यां चरणाभ्यां स्वयमाचरितुमशक्ततया 'यदि पञ्चरात्राभ्यन्तरे कुसुमं दर्शयति, ततस्तवाभिलाषपूरयितृकं प्रसादं दास्यामि' इत्यादिश्य तपनीयाशोकदोहदाय प्रेषिता मालविका यदा सह सख्या वकुलावलिकया प्रमदवनमागच्छति, तदा सह विदूषकेण राज्ञापि तत्र समागतम् । आसीच्च तेषां परस्परं विस्रम्भजल्पितम् । अत्रान्तरे च तत्र समागतया रुष्टया राज्ञोऽनुनयमबहुमन्यमानया इरावत्या नाम द्वितीयया राज्ञः प्रियतमया निवेदिता धारिणी, तच्चित्तमाराधयितुकामा सती मालविकां ससखीं बन्धने चकार । अनन्तरं च मतिमता विदूषकेण सर्पदंशमभिनीय नागमुद्रामादाय बन्धनात्कथमपि मोचिता मालविका संकेतभूते समुद्रगृहे यावद्राज्ञा सह निभृतं वितनोति विस्रम्भालापादिकम्, तावत्पुनरप्युपस्थितमिरावत्या । विदितश्च वृत्तान्तः सर्वोऽप्ययमुत्स्वप्नायमानस्य विदूषकस्य वचनेन । पुनश्च रुष्टया इरावत्या निवेदितापि स्वपुत्रायुष्यकामा सत्कर्मपरायणा धारिणी न मालविकां भूयोऽप्यक्लेशयत् । अत्रान्तरे च विदिताशोकदोहदसाफल्यया मालविकामनोरथं पूरयितुकामया सर्वाभरणभूषितां मालविकां पुरस्कृत्य गतया धारिण्या प्रार्थितो राजापि तमेवाशोकोद्देशं समागतः । एवं सर्वेष्वपि तत्र मिलितेषु, विजित्य माधवसेनदायादं विमोचितवता माधवसेनं वीरसेनेन प्रेषिते द्वे कन्ये अपि तदा तत्र समुपागते । मालविकाकौशिकीकन्यकानां च परस्परप्रत्यभिज्ञानेन सर्वोऽप्यादित आरभ्य मालविकावृत्तान्तः सर्वैरपि तदा व्यक्तमवगतः । अस्मिन्नेवावसरे पत्रमेकं समागतं पुष्यमित्रस्य, योऽग्निमित्रपिता तदानीमश्वमेधदीक्षितः । तत्र च पत्रे वत्सरमेकमश्वमेधीयमश्वमभिरक्षितुं प्रस्थितस्य कुमारस्य वसुमित्रस्य निखिलभूपालविजयपूर्वकं प्रत्यागमनमालिखितम् । ततश्च कल्याणपरम्परावाप्तिमुदितया देव्या धारिण्या समोदं प्रतिग्राहितो राजा मालविकाम् । इति ।

**अत्र च प्रियदर्शिकायां कथावस्तु, न पुराणेतिहासादीनि, परं तु बृहत्कथामुपजीवति। एवं किलोदयनचरितमवगम्यते बृहत्कथाविपरिणामात्कथासरित्सागरात्।**

आसीदर्जुनात्सप्तमः सहस्रानीको नाम राजा कौशाम्ब्याम्। स च साकेताधिपतेः कृतवर्मणस्तनयां मृगावतीमुपयेमे। कालेन सा च गुर्विणी रुधिरसरसि मज्जनमात्मनो दोहदमभिललाष। तद्दोहदं पूरयितुकामेन राज्ञा लाक्षारक्ते विरचिते क्रीडासरसि स्नातोत्थिता मृगावती, मांसशङ्कया गरुडान्वयजेन पक्षिणा गृहीता क्षणादुदयपर्वतमनीयत। ततश्च जीवतीति हतोत्सेन पक्षिणा विमुक्ता क्रन्दन्ती मृगावती जमदग्नेराश्रममासाद्य तत्रैव प्रासूत सुतमुदयनम्। कालेन च जमदग्निः क्षत्रोचितान् संस्कारान्विधाय सकलास्वपि विद्यासु विशेषेण विनिन्ये कुमारमुदयनम्। स च कुमारः कदाचिदाखेटकाय भ्रमन्नदर्शदेकं सर्पं हठाक्रान्तं शबरेण। दृष्ट्वा च दयालुरुदयनकुमारो मात्रा स्वहस्ते धारितं सहस्रानीकनामाङ्कमामुच्य कटकमर्पयित्वा शबराय पन्नगं तमभ्यरक्षत्। [1]स च किन्नराभिधो धृतराष्ट्रसुतो नागः कुमारमुदयनं नागलोकमानीय ललिताभिधां स्वभगिनीमस्मै ददौ। गर्भाधानपर्यन्तशापा च सापि भुजगी स्ववल्लभमामन्त्र्य विद्याधरपदं ययौ। कुमारश्च फणीन्द्रादम्लानां ताम्बूलीस्रजं घोषवतीं वीणामपि लब्ध्वा स्वावासमाययौ। अत्रान्तरे तत्कटकं विचिक्रीषुः शबरो राजकीयैर्गृहीतः सकलमपि वृत्तान्तमाचख्यौ। अथ विदितप्रियाप्रवृत्तिः सहस्रानीकः स्वयमागत्य सपुत्रां मृगावतीमात्मराजधानीमानीतवान्। अनन्तरमभिषेकोचिते समये कुमारमुदयनमभिषिच्य, कुलक्रमागतस्य मन्त्रिणो युगन्धरस्य पुत्रे यौगन्धरायणे सेनापतेः सुप्रतीकस्य सुते रुमण्वति नर्मसचि-

---

१. एवं बृहत्कथामञ्जर्याम्। कथासरित्सागरे तु नागस्य नाम वसुनेमिरिति, स च वासुकिभ्रातेति दृश्यते। उत्तरत्र च वासुकिना दत्ता वीणा इति परमस्ति। नतु नागलोकगमनादिकम्। प्रियदर्शिकायां तु नागलोकगमनमनूद्यत इति बृहत्कथामञ्जर्यनुसृतास्माभिः।

वस्य वल्लभस्य तनये वसन्तके च तत्तत्पदमारूढे निश्चिन्तो राजा सहस्रानीको हिमगिरिमगमत् ।

अथ स उदयनः पितृसमर्पितं वत्सराज्यं प्राप्तोऽपि प्रतीतेषु यौगन्धरायणादिषु राज्यभारमारोप्य स्वयं सर्वदा वीणां वादयन्मृगयायां गजान् गृह्णानः केवलं विषयासक्तमतिरभूत् । अस्मिन्नेव समये चण्डमहासेनो नामोज्जयिन्याः पतिः — यः किल चिरमाराधयंश्चण्डिकातः खड्गमेकं जग्राह । यश्च हत्वा अङ्गारकं नामासुरं तत्सुतामङ्गारवतीमुपयेमे । यस्मै च गोपालकपालकयोः सुतयोरुत्पन्नयोरिन्द्रोत्सवमाचरितवते तुष्टेन देवेन्द्रेण प्रसादीकृता वासवदत्ता नाम तनया — स्वदुहितरं वासवदत्तां वत्सराजाय दित्सुरपि निराकरणभिया प्रार्थनाविमुखस्तत्रोपायान्तरमलभमानः कपटहस्तिप्रयोगेण स्वराजधानीं प्रापय्य वत्सराजं विधाय निगलनमात्मदुहितुरकरोद्वीणाचार्यम् । अवश्यं चानेन व्यतिकरेण तयोरन्योन्यप्रेमसंभावनया फलिष्यति मनोरथ इति समालोच्य निर्भरस्तावदवतस्थे चण्डमहासेनः । अवगतवत्सराजबन्धनवृत्तान्तश्च धीमान्यौगन्धरायणो युक्त्या चण्डमहासेनमतिसंधित्सुः सर्वामपि राज्यचिन्तामारोप्य रुमण्वति सवसन्तकः प्रातिष्ठतोज्जयिनीम् । तत्र च महाकालश्मशाने मित्रतामुपगतस्य योगेश्वराख्यस्य ब्रह्मराक्षसस्य प्रसादाद्रूपपरिवर्तनादीन्योगानाससाद । अथ तेनैव योगबलेनात्मानमुन्मत्तवेषं खल्वाटं कुब्जं वृद्धं हास्यसंजननं च परिवर्त्य, वसन्तकमपि सिरानद्धपृथूदरं दन्तुरदुर्मुखं विधाय, गृहाद्गृहमटन् हासमुपजनयन्नुज्जयिन्यां वीथीषु विचचार । कर्णपरंपरया च विदितैतद्वृत्तान्ता कौतुकाविष्टा च वासवदत्ता तावेतौ स्वान्तःपुरमानाययत् । अथ सर्वा अप्यन्तःपुरकन्यका हासयित्वा योगबलेनादृश्यतां गतो यौगन्धरायणो विजने वत्सराजमभिवीक्ष्य 'अनुरक्तां वासवदत्तामुपलक्ष्य स्वसंकेतं ग्राहयित्वा स्वानुकूलां विधाय कदाचिद्रात्रौ करिणीमारुह्य प्रस्थीयतां सह वासवदत्तया तत्सख्या काञ्चनमालया च । मध्येमार्गं च सर्वं मया सुसंविहितम् । वासवदत्तायाश्चानुरागोत्पादाय तादृशीः कथाः कथयन्नयं वसन्तकोऽप्यत्रैव तिष्ठतु । पुनरपि पूर्ववद्विकृतवेषो भूत्वा सर्वासामपि दृश्यो

भविष्यामि। तदा च प्रार्थ्यतामयं विकृतवेषो वसन्तकः।' इत्युक्त्वा पुनरपि दृश्यो भूत्वा राजप्रार्थनानुरोधेन वसन्तकमपि तत्र स्थापयित्वा स्वयमन्तःपुरान्निर्जगाम। निर्गतश्च पुलिन्दकाख्यं शबराधिपं मध्येमार्गं वत्सराजसाहाय्यकाय परिकल्पयामास। अनन्तरं च वत्सराजोऽप्यनुरक्तां वासवदत्तां सह सख्या काञ्चनमालया संकेतं ग्राहयित्वा कदाचिन्निशीथे यौगन्धरायणदत्तेन योगेन स्रंसितबन्धनः सह वासवदत्ताकाञ्चनमालावसन्तकैरारुह्य भद्रवतीं नाम करेणुकामुज्जयिन्या निर्जगाम। अथावगतवृत्तान्तः पालको नाम राज्ञो द्वितीयः पुत्रो नडागिरिं (नलगिरिम्) गजमारुह्य योद्धुं यावदन्वधावत्, तावत्पूर्णमनोरथेन संतुष्टेन चण्डमहासेनेन प्रेषितः प्रथमः पुत्रो गोपालकः पालकं परावर्त्य स्वयमागत्य कौशाम्बीमात्मभगिन्या विवाहमङ्गलविधिं यथानुरूपमनुष्ठितमभिननन्द। एवं नाम क्रमेण वत्सराजवासवदत्तयोः परस्परमनुरागमयेष्वानन्दपूर्णेष्वतिवहत्सु गणरात्रेषु कदाचिद्राजा बन्धुमतीं नाम राजकन्यामुद्याने दृष्ट्वा तस्यामभिनिविष्टो गूढं गान्धर्वेण विधिना पर्यणैषीत्। या हि राजकन्या गोपालकेन भुजोपार्जिता स्वभगिन्यै वासवदत्तायै उपायनतया प्रेषिता। या च मञ्जुलिकेति नामान्तरेण गोपिता। निभृतस्थिता च वासवदत्ता गूढाचरितमेतं वृत्तान्तमभिवीक्ष्य कुपिता वसन्तकं बन्धुमतीं च बन्धने चकार। ततश्च राजा सांकृत्यायनीं नाम पितृकुलागतां वासवदत्तायाः सखीं प्रव्राजिकां प्रार्थयत वासवदत्ताकोपोपशमनाय। अथ तस्या अनुनयेन प्रसन्ना देवी वासवदत्तापि विमुच्य बन्धनाद्बन्धुमतीं वसन्तकं च राज्ञे प्रादात्स्वयमेव बन्धुमतीम्। एवं गच्छति काले वत्सराजस्य सार्वभौमत्वमभिलष्यन्यौगन्धरायणस्तत्र मगधाधिपतेः प्रद्योतस्य प्रबलशत्रुतामालोच्य कथंचित्तत्कन्यापरिणयानुबन्धेन तस्य बन्धुतां संपादयितुमयतत। तदर्थं च यौगन्धरायणः गोपालकेन ग्राहितार्थां वासवदत्तामनुमान्य लावाणके वह्निदग्धा वासवदत्तेति प्रवादमुत्पाद्य स्वयोगबलेन वासवदत्तां परिगृह्य प्रद्योतदुहितुः पद्मावत्या एव वशे ब्राह्मणीव्यपदेशेन निक्षिप्य समाजगाम। अथ प्रार्थितः प्रद्योतोऽपि स्वदुहितरं पद्मावतीं वत्सराजाय प्रायच्छत्। परिणयानन्तरं च वासवदत्तापि प्रकाशिता यौगन्धरायणेन। तौ च सपत्न्यौ परस्परं भगिन्याविवास्निह्यताम्। कालेन च वासवदत्ता नरवाहनं नाम विद्याधरचक्रवर्तिनं

सुषुवे। तस्मिंश्च न्यस्तभारो वत्सराजोऽपि सह वासवदत्तया पारलौकिकं श्रेयः काङ्क्षन्विपयाद्विनिर्जगाम। इति।

इदं च वत्सराजचरितमवलम्ब्यैव स्वप्नवासवदत्तं तापसवत्सराजं उदयनचरितं प्रियदर्शिका रत्नावली चेति रूपकाणि निर्मितानि तैस्तैर्महाकविभिः। क्वचित्क्वचिच्च नायिकाया नामान्तरं परिकल्पितमवगम्यते। यथा। रत्नावल्यां पद्मावती रत्नावलीति, प्रियदर्शिकायां बन्धुमती प्रियदर्शिकेति व्यपदिष्टा। तापसवत्सराजे तु पद्मावती, पद्मावतीत्येव व्यवहृतेत्यवगम्यते ध्वनिलोचनेन। बृहत्कथामञ्जर्यां तु बन्धुमतीस्थाने रजानिकेति नामधेयमुपलभ्यते। भूयान्हि भेदो दृश्यते बृहत्कथामञ्जर्याः कथासरित्सागरस्य च तत्र तत्र कथाविषयेऽपि। सोमदेवश्च कथासरित्सागरं यथामूलं विपरिणतं प्रतिजानीते। सत्येवं कथं वा भेदस्तावदुपलभ्यताम्। अपि नाम क्षेमेन्द्रसोमदेवाभ्यां साक्षादेव बृहत्कथा विलोकिता स्यात्? अथ वा कर्णपरम्परामनुसृत्य कथा विलिखिता? इमं चास्माकं संशयं 'भूतभाषामयीं प्राहुरद्भुतार्थां बृहत्कथाम्।' इति काव्यादर्शे दण्डिना प्रयुक्तं 'आहुः' पदमुत्तेजयतीति निवेदयामः। तन्न निश्चिनुमः कियद्दूरमनुसृता बृहत्कथा कथासरित्सागरे सोमदेवेनेति। अत एव च न शक्नुमः कियदवधि प्रियदर्शिकायां प्रतिफलति बृहत्कथेति, कियच्च स्वातन्त्र्यमवलम्ब्य कविरात्मना कथावस्तुनः सरसतामापादयामासेति च परिच्छेदेन निर्णेतुम्।

इयं च नाटिका मालविकाग्निमित्रीयमनुसरन्त्यपि न तद्वद्रसपरिमलवती, नापि घटनाचमत्कृता। विमृश्यताम्, तत्र हि मालविकाग्निमित्रयोरन्योन्यानुरागः क्रमेण रुचिरतरं सोपानात्सोपानमारूढ इति प्रधानभूतः शृङ्गाररसः, अङ्कुरितः पल्लवितः कोरकितः पुष्पितः फलित इत्येवं रीत्या कामपि परिपोषभूमिमवतीर्णः। चित्र

दृष्टाया मालविकायाः साक्षाद्दिदृक्षायां राज्ञ औत्सुक्यम्, तत्र निपुणरुचिरो विदूषकोपायः, देव्यास्तत्र प्रतिबन्धः, पण्डितकौशिक्यास्ताटस्थ्यनाटनम्, अगत्या देव्या अभ्युपगमनम्, मालविकायाश्च स्वानुरागसूचकश्चतुष्पदोद्भवस्य छलितस्य प्रयोगः, पुनश्च प्रमदवने मालविकासमागमः, मालविकायाश्च बन्धनस्थिताया युक्त्या विदूषकेण विमोचनम्, भूयोऽपि समुद्रगृहसंकेतः, सत्यप्रतिज्ञया धारिण्या समाचरितमन्ततो मालविकाया राज्ञे प्रतिपादनं च, कीदृशीं रसचर्वणां कीदृशं च वस्तुरचनाचमत्कारमायोजयतीति सचेतसां हृदयमेव प्रमाणम्। नह्यत्र प्रियदर्शिकायां तथानुभूयते रसपरिपोषः कथाघटनचमत्कारो वा। अत्र हि पूर्वमनुत्सुको वार्तानभिज्ञ एव वत्सराजो दृष्टमात्रायामेव नायिकायामनुरज्यते। पुनश्च उदयनचरितनाटकप्रयोगे स्वयमेव वत्सराजवेषो नाम भूत्वा कतिचन कालकला नायिकया सहैकासनमनुभवति। ततश्च विदितवृत्तान्तया वासवदत्तयाबन्धनं प्रापिता विषपानमूर्च्छिता चिकित्सार्थे बहिरानीता विदितबन्धुभावा नायिका राज्ञा देवीसंमतिपूर्वकं परिगृह्यते। अहो महत्खल्वन्तरं महामेरुमशकयोरिव मालविकाग्निमित्रप्रियदर्शिकयो रसपरिपोषक्रमे वस्तुसंघटनसंप्रदाये च। अत्र हि प्रथमाङ्के नायिकाया नायकस्य वा प्रेमावतारवार्ताया अप्यवसरो न कल्पित इति, द्वितीयाङ्के च बलवानतर्कितोपनतो नायकस्य रागावस्कन्दो निरूपित इति च, मन्यामहे, महदिदमन्याय्यमाचरितम्। तृतीयेऽप्यङ्के नाटकप्रयोगसमये द्वित्रान् क्षणान्सर्वेषामपि पुरतः सहासिकामात्रम्, नायकस्य नायिकाया रसस्य वस्तुनश्च कियतीं नाम चारितार्थ्यसरणिमापादयिष्यतीति भावुका एव भावयन्तु। तत्रापि विशेषान्तरमिदम्, यन्नायिका कपटप्रयोगमजानती राजानं वस्तुतो

१. हाधिक् हाधिक्। एतां मनोरमां स्पृशन्त्याः ......(६५)

गृहीतवत्सराजभूमिकां मनोरमामेव मन्यते । किं च न खल्वत्र नाटिकायामपि रत्नावल्यामिव नायकस्य धीरललितत्वं सुष्ठु व्यक्तीकृतम्। प्रत्युत प्रथमेन चतुर्थेन चाङ्केन स्वायत्तसिद्धित्वमिव खल्वभिव्यञ्जितम् । नापि वासवदत्ता देव्यपि स्वभावतः काम‍पि शोभामनुप्रापिता । प्रत्युत स्वकीयस्वभावेन देवीत्वमपि कलुषयन्ती किल सा निबद्धा । सा हि देवी न गाम्भीर्यमभिदर्शयति, न वा सहृदयताम् , नापि परोपकारश्रद्धाम् । परं तु बहुमानगर्विता प्रतिपदं कुप्यति, दीर्घरोषेति च व्यपदिश्यते । एवमपि लोकापवादादुद्विजते इत्येष गणनीयो गुणस्तस्याम् । अन्ते च प्रियदर्शिकायाः प्रतिपादनं भगिनीत्वावगमादनन्तरमिति तदपि न स्वभावस्य नैसर्गिकं रामणीयकं पुष्णाति । यदि नामेयं भगिनी नाभविष्यत् , न जातुचिदपि प्रियदर्शिकां राज्ञे प्रत्यपादयिष्यदिति स्वयमेवोत्तिष्ठन्ती शङ्का कथंकारमुपशाम्यतु । अन्यतो धारिणीं परीक्षामहे । सा हि स्त्रीस्वभावात्सापत्न्यादुद्विजमाना राज्ञो दर्शनपथात्सविशेषं मालविकां रक्षन्त्यपि न खलु साभिनिवेशमभिनयावसरे तस्याः परिहरति दर्शनम् । अज्ञातमालविकाभिजात्यापि तन्मनोरथं जानाना, पञ्चरात्राभ्यन्तरे तपनीयाशोकस्य कुसुमोद्गमे मालविकां सफलप्रार्थनां करिष्यामीति प्रतिजानीते । इरावत्या निर्बन्धेन च मालविकां बन्धने करोति । बन्धनपरिभ्रष्टायै तस्यै वा राज्ञे वा न क्रुध्यति। पुत्रायुष्यकामतया तथौदासीन्यमिति तु व्याजमात्रमिरावतीप्रसादाय सत्यसन्धा च मालविकामनोरथं निर्वोढुमारभते । पश्चादेव मालविकाया वास्तविकवृत्तान्तमवगच्छति। देवी च विदितवृत्तान्ता नितरामनुशेते राजकन्यायाः परिचारिकाभावेन । भृत्यभावोऽपि तस्या वर्षमेकं दुर्दैवनिबन्धन इति विदितपूर्व इति च पण्डित-

कौशिकी समर्थयते इत्यहो परां कोटिमानीता देवी धारिणी महाकविना। वस्तु च किंचिद्विमृशामः। प्रथमाङ्के, स्नानायागस्त्यतीर्थं गत इति दृढवर्मकञ्चुकिनो वचनं चतुर्थाङ्कस्थेन 'इदानीं न युक्तमत्र स्थातुमिति तामहं गृहीत्वा वत्सराजान्तिकं प्रस्थितः। ततः संचिन्त्य तां विन्ध्यकेतोर्हस्ते निक्षिप्य निर्गतोऽस्मि' इति वचनेन किं समाभिप्रायकम्? तथा विन्ध्यकेतुः किंनिमित्तं व्यापादितः। अपि नाम पूर्ववैरम्। तर्हि कुतो वा न तत्प्रस्तावः? अपि नामारण्यकाया अत्रागमनोपायतया परमयं वृत्तान्तः कविना निबद्धः? मालविकाग्निमित्रे च माधवसेनावस्कन्दो दायादरचित इति, पश्चाच्च धनापहारिभिर्दस्युभिः सह संप्रहारसंभ्रम इति युक्तमेव निबद्धो नायिकाया राजकुलप्रवेशाय हृदयसंवादी कश्चिदुपायः। वैतालिकोक्तिरपि केवलमङ्कविच्छेदमात्रोपयोगिनी, न प्राप्तावसरा सती कथायाः कमपि गुणविशेषं पुष्यति। मालविकायां द्वितीयाङ्के वैतालिकोक्तिस्तु हरदत्तनाट्यावसरविच्छेदाय प्रभवतीति रम्यस्तस्यास्तत्रावसरः। द्वितीयस्मिंश्चाङ्के वासवदत्ताया नियमोपवासकथनं किमर्थम्? धारिण्या नियमपरिग्रहस्तु पुत्रायुष्यकामनया। अपि नाम विदूषकस्य स्नानाय राज्ञ उत्कण्ठापरिहाराय च धारागृहोद्यानगमनेन नायिकाया दर्शनार्थं स्यात्? मालविकाया अशोकदोहदार्थमिव प्रियदर्शिकायाः कमलापचयार्थमुद्यानगमनम्, दुष्यन्तस्य शकुन्तलाया इव राज्ञो नायिकाया विभ्रमविलोकनावसरप्रदानाय प्रवेशावकाशकल्पनाय च समायोजितो मधुकरवृत्तान्तश्च सुष्ठुतरं संपन्न इति रमणीयोऽयमत्र सन्दर्भः। परं तु मधुकरव्यवहारयोजनेन शाकुन्तलवदत्र नायकस्य रतिभावो न पुनर्नवीकृत इत्येतदपि न वयमनभिधातुं शक्नुमः। तृतीये च, विजने मालविकयेव नायिकया

क्रियमाणो निर्वेदः, विलापश्च सुतरां रमणीयः संवृत्तः। भूयोऽपि प्राप्त्युपायतया निबद्धो नाटकप्रयोगस्तु न समीचीनोपायः, न वा स्वाभाविको हृदयसंवादी। इदं च भूमिकाग्रहणम्, मालतीमाधवे मालतीवेषधारिणं मकरन्दमनुस्मारयति। अत्र चोपायप्रयोगे पण्डितकौशिकीव सांकृत्यायनी च सहायभूता वा नवेति नहि स्फुटमवगम्यते। तत्र 'नलगिरिग्रहणपरितुष्टेन तातेनार्यपुत्रस्य दत्तान्याभरणानि' इति वाक्यस्थो न स्फुटमवगम्यते कथाभागः, कदा कुत्र नलगिरिं वत्सराजोऽगृह्णादिति। परं तु कदाचिदुद्भ्रान्तस्य नलगिरेर्गजस्य ग्रहणं वत्सराजेन कृतं स्यादिति संभाव्यते। यतो मेघसंदेशेऽपि प्रक्षिप्तपद्ये 'अत्रोद्भ्रन्तः किल नलगिरिः....' इत्येवमभिहितम्। तत्र च कञ्चुकिनः प्रवेशात्प्रभृति गर्भनाटकम्। 'भोः, आज्ञापितोऽस्मि' इति तदीये च वाक्ये 'महासेनेन' इत्युक्तिर्वासवदत्तापितरमुद्दिश्येत्यवगम्यते पूर्वोत्तरसंदर्भेण। कथासरित्सागरेऽपि 'चण्डमहासेनः' इत्युपलभ्यते तस्य नाम। प्रद्योतश्च वासवदत्तापितृत्वेन बहुशः प्रियदर्शिकायां रत्नावल्यां च व्यवहृतः। तन्न ज्ञायते किं नामात्र रहस्यं तत्त्वमिति। तस्मिन्नेव वाक्ये 'उदयनोत्सवम्' इत्येतत् 'मदनोत्सवम्' इति स्यादिति मन्यामहे। गर्भनाटके उन्मत्तवृत्तान्तस्तु तद्वेषधारिणं यौगन्धरायणं गोचरयति। सांकृत्यायनीकृतिर्गर्भनाटकं च 'उदयनचरितं नाम नाटकम्' इत्यवगम्यते। किं प्रकृतोपकारानुरोधेन तथा तस्य नामधेयं कल्पितं कविना; उत वा कविनैव कदाचित्तन्नामधेयमेकं नाटकं रचितं स्यादिति न वयं परिच्छेदेन जानीमः। परं तु 'यथा। उदयनचरिते किलिञ्जहस्तिप्रयोगः' इत्येवं दशरूपकसाहित्यदर्पणयोर्दृश्यते इति परं निवेदयामः। 'सपरिजनम्' इति। पद्यस्योत्त-

राद्धे च 'वासवदत्तापहरणमपि न चिरादेव पश्यामि' इति स्यादिति सहृदयाः केचनाभ्यूहन्तीति च वदामः। 'घणबन्धण....' इति वासवदत्तायाः संगीतकं तु प्राप्तकालं सरसरमणीयं च। मध्येसमाजं च लज्जावत्येव वासवदत्तया यन्निर्गतम्, तन्न रसप्रवाहानुगुणं। केवलं विदूषकविलोकनाय कथंचिदवसरः संपादितः कविनेत्येव प्रतीयते। विदिते च वास्तवार्थे कुपितायां च वासवदत्तायां, तत्तदुपायकथनेन प्रकटितपूर्वमेव बुद्धिमत्त्वं सम्यगभिदर्शितं मनोरमया विदूषके दोषपातनेन। चतुर्थे च वासवदत्ताया विषादः, परिव्राजिकायाः समाश्वासनं च तयोरुक्तिप्रत्युक्तिभङ्ग्या कमपि हृदयसंवादं स्वाभाविकसरणिं चावतीर्णमिति शक्यते वक्तुम्। मालविकाग्निमित्रे अभिनीतसर्पदंशस्य विदूषकस्येवात्र विषपानमूर्छिताया नायिकायाः समवस्था, वत्सराजे अभिनिवेशश्च सुष्ठु करुणामुत्पादयति मनसि भावुकानाम्। दृढवर्मकञ्चुकिनि समागते ततः पश्चात्प्रियदर्शिकाया विषवेगमूर्च्छाधिगमकथनम्, तस्या राजसमीपानयनेन कञ्चुकिनः प्रत्यभिज्ञानमुत्पाद्य नायिकाया वास्तविकवृत्तप्रकटनाय बलात्कविना कृतमिति मतिरुत्पद्यते सचेतसाम्। तथा भगिनीत्वज्ञानानन्तरं राज्ञे नायिकाप्रतिपादनमपि न पुष्णाति देव्याः शोभाम्। मालविका हि प्रथमत एव राज्ञे प्रतिपादयितुं सर्वाभरणभूषिता समानीता। ततः परस्तादेव च द्वयोः कन्यकयोः प्रवेशेन परस्परप्रत्यभिज्ञानम्, मालविकाया राजकन्यात्वनिश्चयश्चेति शोभनं स्वाभाविकं हृदयसंवादि च तत्रावसानिकं वस्तुसंग्रथनम्। एवं प्रत्यङ्गविमर्शे स्फुरन्त्यामपि किंचिदिव न्यूनतायाम्, अत्रानुभूयमानो रसास्वादः, पदलालित्यम्, वर्णनानैपुणं, पात्राणां तत्तत्कालदेशावस्थानुसारेणानुभवसाक्षिकं परस्परमुक्तिप्रत्युक्तिवैदग्ध्यं च कालि

दासीयरूपकेष्विव नितान्तरुचिरं भूयिष्ठं चानुपलभ्यमानमपि इतर-कविरूपकीयापेक्षया विशिष्यत एवेति स्वाशयमाविष्कुर्मः। अयं पुनरपरो विशेषः। यदयं कविः प्रायेण कालिदासं शब्दतोऽर्थतो वर्णनया रसविन्यासेन वस्तुरचनया चानुकुर्वन्पद्यानां परिमिततया योजने, वाक्यानां च भूयसा प्रयोगेऽप्यनुकरोति। न खलु भव-भूत्यादिरूपकेष्विव भूयिष्ठता पद्यानामत्रोपलभ्यते। न चेदं युक्त-रूपम्, यदभिनयदर्शनीयेषु दृश्यकाव्येषु श्रव्यकाव्येष्विव भूयसां पद्यानामुपलम्भो नाम। अस्याश्च नाटिकाया संपूर्णस्य कथाभागस्य कालः पञ्चषाणि वर्षाणि स्युरित्यूह्यते। यतःप्रियदर्शिकायाः प्रथम-प्रवेशावसरे कन्यात्वमविवाहयोग्यत्वं चोपवर्णितम्, अन्ते च तस्या विवाहयोग्यतया परिणयो निर्व्यूढः। इदंचान्ततो वदामः, यदनेन कविना प्रियदर्शिकायां रत्नावल्यां च बृहत्कथेव वत्सराजचरित-विषये ग्रामवृद्धोक्तिरपि प्रमाणीकृतेत्यूहितुमस्त्यत्रान्तरो हेतुरिति। यथा चैतत्तथा निरूपयिष्यामो रत्नावलीभूमिकायाम्।

इति

श्रीवत्सचक्रवर्ती

अभिनवभट्टबाणः कृष्णमाचार्यः।



॥ श्रीः ॥

# ॥ प्रियदर्शिका ॥

## प्रथमोऽङ्कः ।

धूमव्याकुलदृष्टिरिन्दुकिरणैराह्लादिताक्षी पुनः
पश्यन्ती वरमुत्सुकानतमुखी भूयो ह्रिया ब्रह्मणः ।
सेर्ष्या पादनखेन्दुदर्पणगते गङ्गां दधाने हरे
स्पर्शादुत्पुलका करग्रहविधौ गौरी शिवायास्तु वः ॥ १ ॥

जयन्ति जानकीजानेः करुणापाङ्गवीचयः ।
सकृत्प्रपन्नजनतासंरक्षणदृढव्रताः ॥

अथ तत्रभवान् श्रीहर्षनामा महाकविः प्रियदर्शिकां नाम नाटिकामारभमाणः पूर्वरङ्गप्रधानाङ्गभूतां श्लोकद्वयेनाष्टपदात्मिकां सूत्रधारप्रयोज्यां नान्दीं तावदाह—**धूमेति** । करग्रहविधौ विवाहकर्मणि । धूमेन व्याकुले दृष्टी नेत्रे यस्यास्सा तथोक्ता । इन्दुकिरणैः चन्द्रमयूखैः । आह्लादिते आनन्दिते अक्षिणी यस्यास्सा तथोक्ता । पुनः । उत्सुका उत्कण्ठिता । वरं पतिम् । पश्यन्ती । ब्रह्मणः चतुर्मुखात् । ह्रिया लज्जया । भूयः पुनरपि । आनतं मुखं यस्यास्सा तथोक्ता । पादयोः नखाः पादनखाः ते इन्दव इव पादनखेन्दवः, त एव दर्पणानि आदर्शाः तानि गते प्राप्ते तत्र प्रतिबिम्बित इत्यर्थः । गङ्गाम् । दधाने धारयति । हरे । सेर्ष्या सासूया । स्पर्शात् पत्युरङ्गस्पर्शात् । उद्गताः उद्भूताः पुलकाः यस्यास्सा तथोक्ता । गौरी पार्वती । वः युष्माकम् । शिवाय कल्याणाय । अस्तु भवतु । अत्र सूच्यार्थस्तु तत्तद्बुद्धिवैचित्र्येण भिन्नभिन्नो भव-

अपि च ।

**कैलासाद्रावुदस्ते परिचलति गणेषूल्लसत्कौतुकेषु**
**क्रोडं मातुः कुमारे विशति विषमुचि प्रेक्षमाणे सरोषम् ।**
**पादावष्टम्भसीदद्वपुषि दशमुखे याति पातालमूलं**
**क्रुद्धोऽप्याश्लिष्टमूर्तिर्भयघनमुमया पातु तुष्टः शिवो नः ॥ २ ॥**

(नान्द्यन्ते)

**सूत्रधारः**— (परिक्रम्य ।) अद्याहं वसन्तोत्सवे सबहुमानमाहूय,

---

तीति नास्माभिः किमपि प्रपञ्च्यते । " आदौ प्रेमकषायिता हरमुखव्यापारलोला शनैर्व्रीडाभारविघूर्णिता मुकुलिता धूमोद्गमव्याजतः । पत्युस्संमिलिता दृशा सरभसव्यावर्तनव्याकुला पार्वत्याः परिणीतिमङ्गलविधौ दृष्टिश्शिवायास्तु वः ।" इति पार्वतीपरिणयम् ॥ १ ॥

**कैलासाद्राविति** । उदस्ते ऊर्ध्वोत्क्षिप्ते । कैलासाद्रौ । परिचलति कम्पमाने सति । गणेषु प्रमथगणेषु । उल्लसत् उद्भूतं कौतुकं विस्मयः येषु तेषु । कुमारे सुब्रह्मण्ये । मातुः । क्रोडं भुजान्तरम् । विशति । विषमुचि आभरणभूते सर्पराजे । सरोषं सकोपम् । प्रेक्षमाणे विलोकयति । पादस्य अवष्टम्भेन गाढनिवेशनेन सीदत् खिद्यमानं वपुः शरीरं यस्य तस्मिन् तथोक्ते । दशमुखे रावणे । पातालस्य मूलं अधस्तलम् । याति सति । क्रुद्धः क्रोधं प्राप्तोऽपि । उमया पार्वत्या । भयेन घनं गाढं यथा तथा । आश्लिष्टा आलिङ्गिता मूर्तिः यस्य स तथोक्तः । अतएव, तुष्टः । शिवः । नः अस्मान् । पातु रक्षतु ॥ २ ॥

नान्द्यन्ते नान्द्या अवसाने । 'आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रयुज्यते । देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता । मङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी । पदैर्युक्ता द्वादशभिरष्टभिर्वा पदैरुत ।' इति तल्लक्षणम् । 'श्लोकपादः पदं केचित्सुप्तिङन्तमथापरे । परेऽवान्तरवाक्यैकस्वरूपं पदमूचिरे ।' इति नाट्यप्रदीपः ।

सूत्रं धारयतीति सूत्रधारः । 'नाट्यस्य यदनुष्ठानं तत्सूत्रं स्यात्सबीजकम् । रङ्गदैवतपूजाकृत्सूत्रधार इहोदितः ।' 'आसूत्रयन्गुणान्नेतुः कवेरपि च वस्तुनः । रङ्गप्रसाधनप्रौढः सूत्रधार इहोच्यते ।' इति तल्लक्षणम् ।

नानादिग्देशागतेन राज्ञः श्रीहर्षदेवस्य पादपद्मोपजीविना राजसमूहेनोक्तः । यथा "अस्मत्स्वामिना श्रीहर्षदेवेनापूर्ववस्तुरचनालंकृता प्रियदर्शिका नाम नाटिका कृतेत्यस्माभिः श्रोत्रपरम्परया श्रुता, न तु प्रयोगतो दृष्टा । तत्तस्यैव राज्ञः सर्वजनहृदयाह्लादिनो बहुमानादस्मासु चानुग्रहबुद्ध्या यथावत्प्रयोगेण त्वया नाटयितव्या" इति । तद्यावन्नेपथ्यरचनां कृत्वा यथाभिलषितं संपादयामि । (परितोऽवलोक्य ।) आवर्जितानि सामाजिकमनांसीति मे निश्चयः । कुतः ।

**श्रीहर्षो निपुणः कविः परिषदप्येषा गुणग्राहिणी**
**लोके हारि च वत्सराजचरितं नाट्ये च दक्षा वयम् ।**

---

प्रियदर्शिका नाम नाटिका । 'नाटिकासट्टकादीनां नायिकाभिर्विशेषणम्' इत्युक्त्या नायिकायाः प्रियदर्शिकाया नाम्नैव नाटिकाया अपि व्यपदेशः । 'नाटिका क्लृप्तवृत्ता स्यात्स्त्रीप्राया चतुरङ्किका । प्रख्यातो धीरललितस्तत्र स्यान्नायको नृपः । स्यादन्तःपुरसंबद्धा सङ्गीतव्यापृताथवा । नवानुरागा कन्यात्र नायिका नृपवंशजा । संप्रवर्तेत नेतास्यां देव्यास्त्रासेन शङ्कितः । देवी भवेत्पुनर्ज्येष्ठा प्रगल्भा नृपवंशजा । पदे पदे मानवती तद्वशः सङ्गमो द्वयोः । वृत्तिः स्यात्कैशिकी स्वल्पविमर्शाः सन्धयः पुनः ।' इति नाटिकालक्षणम् । बहुमानात्— "प्रणयिषु वा दाक्षिण्यादथवा सद्वस्तुपुरुषबहुमानात् ।" इति विक्रमोर्वशीयम् । नेपथ्यं वेषः । यावत्संपादयामि संपादयिष्यामि । "यावत्पुरानिपातयोर्लट् ।" आवर्जितानि वशीकृतानि ।

**श्रीहर्ष इति** । श्रीहर्षः । निपुणः समर्थः । कविः । एषा । परिषत् समाजोऽपि । गुणान् गृह्णातीति तथा गुणपक्षपातिनीत्यर्थः । वत्सराजस्य उदयनस्य चरितं चरित्रं च । लोके । हारि मनोहरम् । नाट्ये नटनकर्मणि । वयं च । दक्षाः समर्थाः । इह । एकैकं वस्तु पूर्वोक्तपदार्थान्यतममपि । वाञ्छितस्य

वस्त्वेकैकमपीह वाञ्छितफलप्राप्तेः पदं किं पुन-
र्मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः ॥ ३ ॥

(नेपथ्याभिमुखमवलोक्य ।) अये । कथं प्रस्तावनाभ्युद्यते मयि विदितास्मदभिप्रायोऽङ्गाधिपतेर्दृढवर्मणः कञ्चुकिनो भूमिकां कृत्वास्मद्भ्रातेत एवाभिवर्तते । तद्यावदहमप्यनन्तरभूमिकां संपादयामि । (इति निष्क्रान्तः ।)

## इति प्रस्तावना ।

(ततः प्रविशति कञ्चुकी ।)

**कञ्चुकी**— (शोकश्रमं नाटयन् । निःश्वस्य ।) कष्टं भोः कष्टम् ।

राज्ञो विपद्बन्धुवियोगदुःखं
देशच्युतिर्दुर्गममार्गखेदः ।

---

अभिलषितस्य फलस्य सभावशीकाररूपप्रयोजनस्य प्राप्तेः लाभस्य । पदं स्थानम् । मम भाग्यस्य उपचयात् आधिक्यात् । समुदितः संमिलितः । सर्वः । गुणानां कविनैपुण्यादीनां गुणानाम्, तदाधिक्यप्रतिपादनाय धर्मिणोऽपि धर्मेण निर्देश इति रीत्या गुणप्रचुराणां श्रीहर्षादीनां वा । गणः समुदायः । वाञ्छितफलप्राप्तेः पदमित्यत्र, किं पुनः किमु वक्तव्यम् । इयं प्ररोचना ॥ ३ ॥

नेपथ्यं "कुशीलवकुटुम्बस्य स्थली नेपथ्यमिष्यते ।" इति भरतः । भूमिकां वेषम् । प्रस्तावना—तल्लक्षणं तु " नटी विदूषको वापि पारिपार्श्वक एव वा । सूत्रधारेण सहिताः सल्लापं यत्र कुर्वते । चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः । आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा । " इति ।

कञ्चुकी— "अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः । सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते ।" इति तल्लक्षणम् ।

**राज्ञ इति** । राज्ञः । विपत् । बन्धूनां वियोगेन विरहेण दुःखम् । देशात् स्वदेशात् च्युतिः भ्रंशः । दुर्गमे दुस्संचरे मार्गे पथि खेदः मार्गपरिभ्रमणेन

आस्वाद्यतेऽस्याः कटुनिष्फलायाः
फलं मयैतच्चिरजीवितायाः ॥ ४ ॥

(सशोक सविस्मयं च ।) तादृशस्यापि नामाप्रतिहतशक्तित्रयस्य रघुदिलीपनलतुल्यस्य देवस्य दृढवर्मणः "मत्प्रार्थ्यमानाप्यनेन स्वदुहिता वत्सराजाय दत्ता" इति बद्धानुशयेन 'वत्सराजो बन्धनान्न निवर्तते' इति च लब्धरन्ध्रेण सहसागत्य कलिङ्गहतकेन विपत्तिरीदृशी क्रियत इति यत्सत्यमुपपन्नमपि न श्रद्दधे । कथमेकान्तनिष्ठुरमीदृशं च दैवमस्मासु । येन सापि राजपुत्री "यथा कथं चिदेनां वत्सराजायोपनीय स्वामिनमनृणं करिष्यामि" इति मत्वा मया तादृशादपि प्रलयकालदारुणादवस्कन्दसंभ्रमादपवाह्य देवस्य दृढवर्मणो मित्रभावान्वितस्यैवाटविकस्य नृपतेर्विन्ध्यकेतोर्गृहे स्थापिता सती, स्नानाय नातिदूरमित्यगस्त्यतीर्थं गते मयि, क्षणात्कैरपि निपत्य हते विन्ध्यकेतौ, रक्षोभिरिव निर्मानुषीकृते दग्धे स्थाने, न ज्ञायते कस्यामवस्थायां वर्तत इति । निपुणं च विचितमेतन्मया सर्वं स्थानम् । न च ज्ञातं किं तैरेव दस्युभिर्नीता, अथवा दग्धेति । तत्किं

---

क्लेशः । एतत् इदं सर्वम् । मया । कट्वी कठिना दूषणबहुला वा, निष्फला व्यर्था च तस्याः कटुनिष्फलायाः । अस्याः । चिरजीवितायाः चिरकालप्राणधारणस्य । फलं फलभूतम् । आस्वाद्यते अनुभूयते ॥ ४ ॥

शक्तित्रयं मन्त्रशक्तिः, प्रभुशक्तिः, उत्साहशक्तिः । अनुशयः दीर्घद्वेषः । न श्रद्दधे न विश्वसिमि । एकान्तनिष्ठुरं अत्यन्तक्रूरम् । अवस्कन्दसंभ्रमात् बलान्निरोधसंरम्भात् । अपवाह्य निर्गमय्य । आटविकस्य वनेवासिनः । विचितं अन्विष्टम् । दस्युभिः चोरैः ।

करोमि मन्दभाग्यः । (विचिन्त्य) अये एवं श्रुतं मया—
"बन्धनात्परिभ्रष्टः प्रद्योततनयामपहृत्य वत्सराजः कौशाम्बी-
मागतः" इति । किं तत्रैव गच्छामि । (निःश्वस्यात्मनोऽवस्थां
पश्यन् ।) किमिव हि राजपुत्र्या विना तत्र गत्वा कथयिष्या-
मि । अये कथितं चाद्य मम विन्ध्यकेतुना—"मा भैषीः ।
जीवति तत्रभवान्महाराजो दृढवर्मा गाढप्रहारजर्जरीकृतो बद्ध-
स्तिष्ठति" इति । तदधुना स्वामिनमेव गत्वा पादपरिचर्यया
जीवितशेषमात्मनः सफलयिष्यामि । (परिक्रम्योर्ध्वमवलोक्य ।)
अहो अतिदारुणता शरदातपस्य । यदेवमनेकदुःखसंतापि-
तेनापि मया तीक्ष्णोऽवगम्यते ।

**घनबन्धनमुक्तोऽयं कन्याग्रहणात्परां तुलां प्राप्य ।**
**रविरधिगतस्वधामा प्रतपति खलु वत्सराज इव ॥ ५ ॥**

[इति निष्क्रान्तः ।

## इति विष्कम्भकः ।

कौशाम्बीं कुशाम्बेन राज्ञा निर्वृत्तां राजधानीम् ।

**घनेति** । घनानां मेघानां बन्धनात् आच्छादनात् मुक्तः । अन्यत्र घनं गुरु यत् बन्धनं कारागृहावस्थानरूपो निर्बन्धः तस्मात् मुक्तः । कन्यायाः कन्या-राशेः, पक्षे कन्यायाः प्रद्योतसुतायाः ग्रहणात् परिग्रहात् । परां उत्तरां, श्रेष्ठां च । तुलां तुलाराशिं, पक्षे सादृश्यं, उत्कर्षं वा । प्राप्य । अधिगतं प्राप्तं स्वधाम निज-तेजः येन स तथोक्तः । रविः सूर्यः । वत्सराजः उदयन इव । प्रतपति प्रकर्षेण तापवान् भवति । पक्षे प्रतापवान् भवति । खल्विति प्रसिद्धौ । **उपमा** ॥ ५ ॥

विष्कम्भकः—'वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः । संक्षेपार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः । एकानेककृतः शुद्धः सङ्कीर्णो नीचमध्यमैः ।' इति दश-रूपकम् ।

( ततः प्रविशति राजा विदूषकश्च । )

**राजा—**

**भृत्यानामविकारिता परिगता दृष्टा मतिर्मन्त्रिणां**
**मित्राण्यप्युपलक्षितानि विदितः पौरानुरागोऽधिकम् ।**
**निर्व्यूढा रणसाहसव्यसनिता स्त्रीरत्नमासादितं**
**निर्व्याजादिव धर्मतः किमिव न प्राप्तं मया बन्धनात् ॥ ६ ॥**

**विदूषकः—** ( सरोषम् । ) भो वअस्स, कहं तं एव्व दासीए उत्तं बन्धणहदअं पसंसेसि । तं दाणिं विसुमरेहि । जं तह णवग्गहो विअ गअवई खलखलाअमाणलोहसिङ्खलाबन्धपडिक्खलन्तचलणो सुण्णदुक्खरहिअअसंदावो रोसवसुत्तम्भिददिट्ठी गरुअकरफोडिअधरणिमग्गो रअणीसु वि अणिद्दासुहं अणुहूदोसि ।

---

विदूषकः—'कुसुमवसन्ताद्यभिधः कर्मवपुर्वेषभाषाद्यैः । हास्यकरः कलहरतिर्विदूषकः स्यात्स्वकर्मज्ञः ।' इति तल्लक्षणम् ।

**भृत्यानामिति** । भृत्यानां कर्मकराणाम् । अविकारिता अविकारः पूर्वावस्थातो व्यत्यासाभावः । परिगता ज्ञाता । मन्त्रिणाम् । मतिः । दृष्टा । मित्राण्यपि । उपलक्षितानि ज्ञातानि । पौराणां पुरनिवासिनां जनानां अनुरागः प्रीतिः । अधिकं सम्यक् । विदितः । रणे युद्धे यत् साहसं दुष्करं कर्म तत्र व्यसनिता आसक्तिः कुतूहलं वा । निर्व्यूढा निर्वृत्ता । स्त्रीरत्नं श्रेष्ठा तरुणी प्रद्योतसुता । आसादितं प्राप्तम् । मया । बन्धनात् । निर्व्याजात् निष्कपटात् निरभिसंधि कृतादित्यर्थः । धर्मतः धर्मादिव । किमिव न प्राप्तं सर्वं प्राप्तमेवेत्यर्थः । **विभावना** ॥ ६ ॥

दास्याः पुत्रं निन्दनीयम् । " षष्ठ्या आक्रोशे " इत्यलुक् । नवः नूतनः ग्रहः ग्रहणं यस्य सः नवग्रहः नूतनगृहीत इत्यर्थः ।

भो वयस्य, कथं तमेव दास्याः पुत्रं बन्धनहतकं प्रशंससि। तमिदानीं विस्मर । यं तथा नवग्रह इव गजपतिः खलखलायमानलोहशृङ्खलाबन्धप्रतिस्खलच्चरणः शून्यदुष्करहृदयसंतापो रोषवशोत्तम्भितदृष्टिर्गुरुककरस्फोटितधरणिमार्गो रजनीष्वप्यनिद्रासुखमनुभूतोऽसि ।

**राजा**— वसन्तक, दुर्जनः खल्वसि । पश्य ।

**दृष्टं चारकमन्धकारगहनं नो तन्मुखेन्दुद्युतिः**
**पीडा ते निगलस्वनेन मधुरास्तस्या गिरो न श्रुताः ।**
**क्रूरा बन्धनरक्षिणोऽद्य मनसि स्निग्धाः कटाक्षा न ते**
**दोषान्पश्यसि बन्धनस्य न पुनः प्रद्योतपुत्र्या गुणान् ॥ ७ ॥**

**विदूषकः**— (सगर्वम् ।) भो जइ दाव बन्धणं सुहणिबन्धणं होइ । ता कीस तुमं दिढवम्मा बद्धोत्ति कलिङ्गरण्णो उवरि रोसं बन्धेसि ।

---

दुष्करः दुस्सहः । उत्तम्भिता स्तब्धीकृता । करः हस्तः शुण्डा च । अनिद्रासुखं निद्रासुखरहितं यथा तथा । अनुभूतः अनुभूतवान् । कर्तरि क्तः ।

**दृष्टमिति** । अन्धकारगहनं तमोनिबिडम् । चारकं बन्धनालयः कारागृहम् । दृष्टं आलोचितम् । तस्याः प्रद्योतसुतायाः मुखेन्दोः वदनचन्द्रस्य द्युतिः कान्तिः । नो (दृष्टा) नालोचिता । ते तव । निगलस्य शृङ्खलायाः स्वनेन शब्देन । पीडा उपद्रवः । मधुराः । तस्याः । गिरः वाचः । न श्रुताः । अद्य । क्रूराः । बन्धनरक्षिणः कारारक्षापुरुषाः । ते । मनसि । तानेव चिन्तयसीत्यर्थः । स्निग्धाः स्नेहपूर्णाः । कटाक्षाः । न (मनसि) बन्धनस्य । दोषान् एव । पश्यसि विमृशसि । प्रद्योतपुत्र्याः । गुणान् पुनः गुणांस्तु । न (पश्यसि) तत्तद्दोषनिवारकाणां गुणानां सत्वेऽपि केवलं दोषैकदर्शी भवान् दुर्जन इति भावः ॥ ७ ॥

निबन्धनं कारणम् ।

भो यदि तावद्बन्धनं सुखनिबन्धनं भवति। तत्कस्मात्त्वं दृढवर्मा बद्ध इति कलिङ्गराजस्योपरि रोषं बध्नासि।

**राजा**— (विहस्य।) धिङ्मूर्ख, न खलु सर्वो वत्सराजः। य एवं वासवदत्तामवाप्य बन्धनान्निर्यास्यति। तदास्तां तावदियं कथा। विन्ध्यकेतोरुपरि बहून्यहानि विजयसेनस्य प्रेषितस्य। न चाद्यापि तत्सकाशात्कश्चिदागतः। तदाहूयतां तावदमात्यो रुमण्वान्। तेन सह किंचिदालपितुमिच्छामि।

(प्रविश्य।)

**प्रतीहारी**— जेदु जेदु देव्वो। एसो क्खु विजअसेणो अमच्चो रुमण्णो वि पडिहारभूमिं उवट्ठिआ।

जयतु जयतु देवः। एष खलु विजयसेनः, अमात्यो रुमण्वानपि प्रतीहारभूमिमुपस्थितौ।

**राजा**— त्वरितं प्रवेशय तौ।

**प्रतीहारी**— जं देवो आणवेदि।

यद्देव आज्ञापयति। (इति निष्क्रान्तः।)

(ततः प्रविशति रुमण्वान्विजयसेनश्च।)

**रुमण्वान्**— (विचिन्त्य।)

**तत्क्षणमपि निष्क्रान्ताः कृतदोषा इव विनापि दोषेण।**
**प्रविशन्ति शङ्कमाना राजकुलं प्रायशो भृत्याः॥ ८॥**

(उपसृत्य।) जयतु देवः।

---

अमा सह भवः अमात्यः। प्रतीहारभूमिं द्वारदेशम्।

**तत्क्षणमिति**। प्रायशः प्रायेण। भृत्याः सेवकाः। तत्क्षणं तस्मिन्नेव

**राजा**— (आसनं निर्दिश्य ।) रुमण्वन्, इत आस्यताम् ।

**रुमण्वान्**— (सस्मितमुपविश्य ।) एष खलु जितविन्ध्यकेतुर्विजयसेनः प्रणमति ।

(विजयसेनस्तथा करोति ।)

**राजा**— (सादरं परिष्वज्य ।) अपि कुशली भवान् ।

**विजयसेनः**— अद्य स्वामिनः प्रसादात् ।

**राजा**— विजयसेन, स्थीयताम् ।

(विजयसेन उपविशति ।)

**राजा**— विजयसेन, कथय विन्ध्यकेतोर्वृत्तान्तम् ।

**विजयसेनः**— देव, किमपरं कथयामि । यादृशः स्वामिनि कुपिते ।

**राजा**— तथापि विस्तरतः श्रोतुमिच्छामि ।

**विजयसेनः**— देव, श्रूयताम् । इतो वयं देवपादादेशाद्यथादिष्टेन करितुरगपदातिसैन्येन महान्तमप्यध्वानं दिवसत्रयेणोल्लङ्घ्य प्रभातवेलायामतर्किता एव विन्ध्यकेतोरुपरि निपतिताः स्मः ।

---

क्षणे । निष्क्रान्ताः कार्यार्थं बहिर्गता अपि । दोषेण विनापि । कृतः दोषः यैस्ते कृतदोषा इव । शङ्कमानाः सभयाः सन्तः । राजकुलं राजगृहम् । प्रविशन्ति ॥

"अहो दुरासदो हि राजमहिमा ।
न च न परिचितो न चाप्यगम्य-
श्चकितमुपैमि तथापि पार्श्वमस्य ।"

इति मालविकाग्निमित्रीयम् ।

**राजा**— ततस्ततः ।

**विजयसेनः**— ततः सोऽप्यस्मद्बलतुमुलकलकलाकर्णनेन प्रतिबुद्धः केसरीव विन्ध्यकन्दरान्निर्गत्य विन्ध्यकेतुरनपेक्षितबलवाहनो यथासंनिहितकतिपयसहायः सहसा स्वनामोद्घोषयन्नस्मानभियोद्धुं प्रवृत्तः ।

**राजा**— (रुमण्वन्तमवलोक्य सस्मितम् ।) शोभितं विन्ध्यकेतुना । ततस्ततः ।

**विजयसेनः**— ततोऽस्माभिः "अयमसौ" इति द्विगुणतरबद्धमत्सरोत्साहैर्महता विमर्देन निःशेषितसहाय एक एव विमर्दिताधिकबलक्रोधवेगो दारुणतरं संप्रहारमकरोत् ।

**राजा**— साधु विन्ध्यकेतो, साधु साधु ।

**विजयसेनः**— किं वा वर्ण्यते । देव, संक्षेपतो विज्ञापयामि ।

**पादातं पत्तिरेव प्रथमतरमुरःपेषमात्रेण पिष्ट्वा**
**दूरान्नीत्वा शरौघैर्हरिणकुलमिव त्रस्तमश्वीयमाशाः ।**
**सर्वत्रोत्सृष्टसर्वप्रहरणनिवहस्तूर्णमुत्खाय खड्गं**
**पश्चात्कर्तुं प्रवृत्तः करिकरकदलीकाननच्छेदलीलाम् ॥ ९ ॥**

---

तुमुलं संकुलम् । कन्दरः गुहा । मत्सरः विद्वेषः । विमर्दः उपमर्दनं, युद्धं वा । विमर्दितं विमर्दनम् । संप्रहारः युद्धम् ।

**पादातमिति** । प्रथमतरं आदितः । पादातं पदातीनां समूहम् । पत्तिः पदातिः सन्नेव । उरसा वक्षसा पेषमात्रेण घर्षणेनैव । पिष्ट्वा संचूर्ण्य नाशयित्वेत्यर्थः । शराणां बाणानां ओघैः समूहैः । त्रस्तं भीतम् । अश्वीयं अश्वानां समूहम् । हरिणानां मृगाणां कुलं यूथमिव । आशाः दिशः । दूरात् दूरम् । नीत्वा प्रापय्य

एवं बलत्रितयमाकुलमेक एव
कुर्वन्कृपाणकिरणच्छुरितांसकूटः ।
शस्त्रप्रहारशतजर्जरितोरुवक्षाः
श्रान्तश्चिराद्विनिहतो युधि विन्ध्यकेतुः ॥ १० ॥

**राजा**— रुमण्वन्, सत्पुरुषोचितं मार्गमनुगच्छतो यत्सत्यं व्रीडिता एव वयं विन्ध्यकेतोर्मरणेन ।

**रुमण्वान्**— देव, त्वद्विधानामेव गुणैकपक्षपातिनां रिपोरपि गुणाः प्रीतिं जनयन्ति ।

**राजा**— विजयसेन, अप्यस्ति विन्ध्यकेतोरपत्यम्? यत्रास्य परितोषस्य फलं दर्शयामि ।

**विजयसेनः**— देव, इदमपि विज्ञापयामि । एवं सबन्धुपरिवारे हते विन्ध्यकेतौ, तमनुसृतासु सहधर्मचारिणीषु, विन्ध्य-

---

दूरं विद्राव्येत्यर्थः । सर्वत्र सर्वदिक्षु सकलसैन्येषु वा । उत्सृष्टः मुक्त सर्वेषां प्रहरणानां आयुधानां निवहः समूहः येन स तथोक्तः । तूर्णं वेगात् । खड्गं असिम् । उत्खाय कोशादाकृष्य । उत्पूर्वात्खनतेर्ल्यप् । पश्चात् अनन्तरम् । करिणां गजानां कराः शुण्डा एव कदल्यः रम्भाः तासां काननं वनं समूह इत्यर्थः तस्य छेदलीलां छेदनकेलिम् । कर्तुं प्रवृत्तः ॥ ९ ॥

**एवमिति** । कृपाणस्य खड्गस्य किरणैः मयूखैः छुरितः रूषितः अंसकूटः अंसशिखरं यस्य स तथोक्तः । विन्ध्यकेतुः । एवम् । बलत्रितयं गजतुरगपदातिरूपं त्रिविधं सैन्यम् । एक एव सन् । आकुलं विशीर्णम् । कुर्वन् । शस्त्रप्रहाराणां शतैः जर्जरितं शिथिलितं भिन्नमित्यर्थः तादृशं उरु विशालं वक्षः यस्य स तथा । अतएव, श्रान्तः प्रक्षीणः । चिरात् चिरकालानन्तरम् । युधि युद्धे । विनिहतः मारितः ॥ १० ॥

सहधर्मचारिणीषु पत्नीषु ।

शिखराश्रितेषु जनपदेषु, शून्यभूते तत्स्थाने "हा तात हा तात" इति कृतकृपणप्रलापा विन्ध्यकेतोर्वेश्मन्याभिजात्यानुरूपा कन्यका "तद्दुहिता" इत्यस्माभिरानीता द्वारि तिष्ठति । तां प्रति देवः प्रमाणम् ।

**राजा**— यशोधरे, गच्छ गच्छ । त्वमेव वासवदत्तायाः समर्पय । वक्तव्या च देवी— "भगिनीबुद्ध्या त्वयैव सर्वदा द्रष्टव्या । गीतनृत्तवाद्यादिषु विशिष्टकन्यकोचितं सर्वं शिक्षयितव्या । यदा वरयोग्या भविष्यति तदा मां स्मारय" इति ।

**प्रतीहारी**— जं देवो आणवेदि ।

यद्देव आज्ञापयति । [इति निष्क्रान्ता ।

(नेपथ्ये वैतालिकः ।)

**लीलामज्जनमङ्गलोपकरणस्नानीयसंपादिनः**
**सर्वान्तःपुरवारविभ्रमवतीलोकस्य ते संप्रति ।**
**आयासस्खलदंशुकाव्यवहितच्छायावदातैः स्तनै-**
**रुत्क्षिप्तापरशातकुम्भकलशेवालंकृता स्नानभूः ॥ ११ ॥**

जनपदेषु जनेषु । "भवेज्जनपदो जानपदोऽपि जनदेशयोः ।" इति विश्वः । कृपणः दीनः । आभिजात्यं कुलीनता ।

वैतालिकः— विविधेन विगतेन वा तालेन चरति व्यवहरतीति वैतालिकः ।

"तत्तत्प्रहरणयोग्यै रागैस्तत्कालवाचिभिः श्लोकैः ।
सरभसमेव वितालं गायन्वैतालिको भवति ॥" इति तल्लक्षणम् ।

**लीलेति** । संप्रति । ते तव । स्नानभूः स्नानभूमिः । लीलया विलासेन यन्मज्जनं तदेव मङ्गलं शुभं कर्म तत्र उपकरणानि सामग्रीभूतानि यानि स्नानीयानि स्नानार्थानि चूर्णानि तानि संपादयतीति तस्य । सर्वस्य सकलस्य अन्तःपुरे विद्यमानस्य वारविभ्रमवतीलोकस्य वारस्त्रीजनस्य । आयासेन श्रमेण स्खलद्भिः

**राजा**— (ऊर्ध्वमवलोक्य ।) अये कथं नभोमध्यमध्यास्ते भगवान्सहस्रदीधितिः । संप्रति हि ।

**आभात्यर्कांशुतापक्वथदिव शफरोद्वर्तनैर्दीर्घिकाम्भ-**
**श्छत्राभं नृत्तलीलाशिथिलमपि शिखी बर्हभारं तनोति ।**
**छायाचक्रं तरूणां हरिणशिशुरुपैत्यालवालाम्बुलुब्धः**
**सद्यस्त्यक्त्वा कपोलं विशति मधुकरः कर्णपालीं गजस्य ॥**

**रुमण्वन्, उत्तिष्ठोत्तिष्ठ । प्रविश्याभ्यन्तरमेव कृतयथोचितक्रियाः सत्कृत्य विजयसेनं कलिङ्गोच्छित्तये प्रेषयामः ।**

[इति निष्क्रान्ताः सर्वे ।

## इति प्रथमोऽङ्कः ।

गलद्भिः च्युतैः अंशुकैः वस्त्रैः अव्यवहिता अनाच्छन्ना छाया कान्तिः येषां ते तादृशाः अवदाता निर्मलाश्च तैः । स्तनैः कुचैः । उत्क्षिप्ताः ऊर्ध्वभूताः अपरे अन्ये ये शातकुम्भकलशाः स्वर्णघटाः यस्यां सा तथोक्तेव । अलंकृता । **उत्प्रेक्षा** ॥

**आभातीति** । दीर्घिकायाः वाप्याः अम्भः जलम् । शफराणां मीनानां उद्वर्तनैः विवर्तनैः । अर्कांशुतापेन सूर्यकिरणसंतापेन क्वथत् उत्तपत्, इव । आभाति प्रतिभाति । शिखी मयूरः । नृत्तलीलायां नर्तनकेल्यां शिथिलं अनादरं सदपि । नृत्तलीलया शिथिलं श्रान्तमिति वा । बर्हभारं कलापभरम् । छत्राभं छत्राकारम् । करोति । हरिणशिशुः मृगपोतकः । आलवालाम्बुनि आलवालजले लुब्धः तृष्णया सभिलाषः सन् । तरूणां वृक्षाणाम् । छायाचक्रं मण्डलाकारां छायाम् । उपैति, सलिलमिति भ्रमेण तत्रागच्छतीत्यर्थः । मधुकरः भृङ्गः । सद्यः । गजस्य । कपोलं गण्डस्थलम् । त्यक्त्वा विमुच्य । कर्णपालीं कर्णोत्सङ्गं कर्णाभ्यन्तरमित्यर्थः । प्रशंसावाची प्रान्तवाची वा पालीशब्दः । विशति । तत्र छायाया विद्यमानत्वादितिभावः । **स्वभावोक्तिः** ॥

**अङ्कः**— "प्रत्यक्षनेतृचरितो बिन्दुव्याप्तिपुरस्कृतः ।
अङ्को नानाप्रकारार्थसंविधानरसाश्रयः ।" इति लक्षणम् ।

**इति प्रथमाङ्कव्याख्या समाप्ता ।**

# द्वितीयोऽङ्कः ।

(ततः प्रविशति विदूषकः ।)

**विदूषकः**—णं भणिदोह्मि इन्दीवरिआए, जह—'अज्ज, उववासणिअमट्ठिआ देवी वासवदत्ता सोत्थिवाअणणिमित्तं सद्दावेदि' त्ति। ता जाव धाराघरुज्जाणदिग्घिआए ण्हाइअ देवीपासं गदुअ कुक्कटवादं करिस्सं। अण्णहा कहं अह्माणं सरिसा बह्मणा राअकुले पडिग्गहं करेन्ति। (नेपथ्याभिमुखमवलोक्य।) कहं एसो पिअवअस्सो अज्ज देवीए विरहुक्कण्ठाविणोदणणिमित्तं धाराघरुज्जाणं एव्व पत्थिदो। ता जाव वअस्सेण सह एव्व गदुअ जहोदिदं अणुचिट्ठिस्सं।

ननु भणितोऽस्मीन्दीवरिकया, यथा—'आर्य, उपवासनियमस्थिता देवी वासवदत्ता स्वस्तिवायननिमित्तं शब्दापयेत्' इति। तद्यावद्धारागृहोद्यानदीर्घिकायां स्नात्वा

---

स्वस्तिवायनं क्षेमप्रदं व्रतोपायनम्। शब्दापयेत् आह्वयेत्। आपनं आपः, शब्दस्य आपः शब्दापः शब्दापं करोति शब्दापयतीति रूपं साधनीयम्। स्पष्टा चेयं रीतिर्मनोरमायाम्। "सद्दाएदित्ति" प्राकृतम्, "शब्दायेत" इति संस्कृतं चाश्रित्य क्वचिद्दृश्यमाने पाठान्तरे तु, शब्दं करोति शब्दायते। शब्दवैरेति क्यङिति व्यख्येयम्। कुक्कुटवादं कुक्कुटरीतिं दम्भाचरणमित्यर्थः। उत्कण्ठासहितः। उत्कण्ठालक्षणं तु—

"सर्वेन्द्रियसुखास्वादो यत्रास्तीत्यभिमन्यते।
तत्प्राप्तीच्छां ससंकल्पामुत्कण्ठां कवयो विदुः।" इति।

देवीपार्श्वे गत्वा कुक्कुटवादं करिष्यामि । अन्यथा कथमस्माभिः सदृशा ब्राह्मणा राजकुले प्रतिग्रहं कुर्वन्ति । कथमेष प्रियवयस्योऽद्य देव्या विरहोत्कण्ठाविनोदननिमित्तं धारागृहोद्यानमेव प्रस्थितः । तद्यावद्वयस्येन सहैव गत्वा यथोदितमनुष्ठास्यामि ।

(ततः प्रविशति सोत्कण्ठो राजा ।)

**राजा**—

**क्षामां मङ्गलमात्रमण्डनभृतं मन्दोद्यमालापिनी-**
**मापाण्डुच्छविना मुखेन विजितप्रातस्तनेन्दुद्युतिम् ।**
**सोत्कण्ठां नियमोपवासविधिना चेतो ममोत्कण्ठते**
**तां द्रष्टुं प्रथमानुरागजनितावस्थामिवाद्य प्रियाम् ॥ १ ॥**

**विदूषकः**— (उपसृत्य ।) सोत्थि होदे । वड्ढदु भवं ।
स्वस्ति भवते । वर्धतां भवान् ।

**राजा**— (विलोक्य ।) वसन्तक, कस्मात्प्रहृष्ट इव लक्ष्यसे ।

---

**क्षामामिति** । क्षामां कृशाम् । मङ्गलमात्रमण्डनानि मङ्गल्यसूत्रताटङ्कादीनि यानि मङ्गलचिह्नभूतान्याभरणानि तानि बिभर्तीति ताम् । मन्दं यथा तथा मन्देन वा उद्यमेन प्रयत्नेन आलपतीति ताम् । आपाण्डुः शुक्ला छविः कान्तिः यस्य तेन । मुखेन । विजिता प्रातस्तनस्य प्रातःकालभवस्य इन्दोः चन्द्रस्य द्युतिः कान्तिः यया ताम् । "प्रातचन्द्रद्युति वदनम्" इति मालतीमाधवम् । नियमार्थः य उपवासविधिः उपवासानुष्ठानं तेन । सोत्कण्ठां मद्दर्शने समुत्सुकाम् । नियमोपवासविधिनेत्येतत्सर्वत्रान्वेतीति वा । प्रथमानुरागेण पूर्वानुरागेण जनिता अवस्था कृशत्वादिरूपा यस्यास्तामिव । तां चिरपरिचिताम् । प्रियाम् । अद्य । द्रष्टुम् । मम । चेतः । समुत्कण्ठते उत्सुकं भवति ।

**विदूषकः**— अच्चदि खु देवी बह्मणं ।

अर्चति खलु देवी ब्राह्मणम् ।

**राजा**— यद्येवं ततः किम् ।

**विदूषकः**— (सगर्वम् ।) भो, ईरिसो क्खु बह्मणो । जो चउव्वेदपञ्चवेदछट्टवेदबह्मणसहस्सपज्जाउले राअउले पुढमं अहं एव्व देवीसआसादो सोत्थिवाअणं लहेमि ।

भो ईदृशः खलु ब्राह्मणः । यश्चतुर्वेदपञ्चवेदषड्वेदब्राह्मणसहस्रपर्याकुले राजकुले प्रथममहमेव देवीसकाशात्स्वस्तिवायनं लभे ।

**राजा**— (विहस्य ।) वेदसंख्ययैवावेदितं ब्राह्मण्यम् । तदागच्छ महाब्राह्मणे । धारागृहोद्यानमेव गच्छावः ।

**विदूषकः**— जं भवं आणवेदि ।

यद्भवानाज्ञापयति ।

**राजा**— गच्छाग्रतः ।

**विदूषकः**— भो एहि गच्छह्म । (परिक्रम्यावलोक्य च ।) वअस्स, पेक्ख पेक्ख । अविरदपडन्तविविहकुसुमसुउमालसिलाअलुच्छङ्गस्स परिमलणिलीणमहुअरभरभग्गबउलमालदीलदाजालअस्स कमलगन्धगहणुद्दाममारुदपज्जवबुद्धबन्धूअबन्धणस्स अविरलतमालतरुपिहिदातपप्पआसस्स अस्स धाराघरुज्जाणस्स सस्सरीअअं ।

---

शिलोत्सङ्गः शिलामध्यम् । जालकं समूहः, कोरको वा । बन्धनं वृन्तम् ।

भो एहि गच्छावः। भो वयस्य, पश्य पश्य। अविरतपतद्विविधकुसुमसुकुमारशिलातलोत्सङ्गस्य परिमलनिलीनमधुकरभरभग्नबकुलमालतीलताजालकस्य कमलगन्धग्रहणोद्दाममारुतपर्यवबुद्धबन्धूकबन्धनस्याविरलतमालतरुपिहितातपप्रकाशस्यास्य धारागृहोद्यानस्य सश्रीकताम्।

**राजा**— वयस्य, साध्वभिहितम्। अत्र हि।

**वृन्तैः क्षुद्रप्रवालस्थगितमिव तलं भाति शेफालिकानां**
**गन्धः सप्तच्छदानां सपदि गजमदामोदमोहं करोति।**
**एते चोन्निद्रपद्मच्युतबहलरजःपुञ्जपिङ्गाङ्गरागा**
**गायन्त्यव्यक्तवाचः किमपि मधुलिहो वारुणीपानमत्ताः॥**

**विदूषकः**— भो वअस्स, एदं पि दाव पेक्ख पेक्ख। जो एसो अविरलपडन्तकुसुमणिअरो अज्ज वि पत्तन्तरगलन्तवरिसावसाणसलिलबिन्दू विअ लक्खीअदि सत्तवण्णपाअवो।

**वृन्तैरिति**। तलं भूतलम्। शेफालिकानां कुसुमविशेषाणाम्। वृन्तैः बन्धनैः। क्षुद्राः अल्पाः खण्डीकृता इत्यर्थः, तादृशैः प्रवालैः विद्रुमैः स्थगितं आच्छादितमिव। भाति शोभते, विद्रुमखण्डास्तृतमिव विराजतीत्यर्थः। सप्तच्छदानां सप्तपर्णकुसुमानाम्। गन्धः आमोदः। गजमदस्य गजमदजलस्य य आमोदः गन्धः तस्य मोहं भ्रमम्। सपदि। करोति। उन्निद्रेभ्यः विकसितेभ्यः पद्मेभ्यः च्युतैः गलितैः बहुलैः अधिकैः रजःपुञ्जैः परागसमूहैः पिङ्गः पिशङ्गः अङ्गरागः अङ्गानुलेपनं, अवयवरक्तिमा वा येषां ते तथोक्ताः। रजःपुञ्ज एव पिङ्गाङ्गरागो येषामिति वा। वारुण्याः मद्यस्य पुष्परसस्येत्यर्थः पानेन मत्ताः मदं प्राप्ताः। एते। मधुलिहः भृङ्गाश्च। अव्यक्ता अस्पष्टा वाक् ध्वनिः येषां ते तादृशाः, गुञ्जन्तः सन्त इत्यर्थः। किमपि, गायन्ति गानं कुर्वन्ति॥ २॥

भो वयस्य, इदमपि तावत्पश्य पश्य । य एषोऽवि-
रलपतत्कुसुमनिकरोऽद्यापि पत्रान्तरगलद्वर्षावसानस-
लिलबिन्दुरिव लक्ष्यते सप्तपर्णपादपः ।

**राजा**— वयस्य, सम्यगुत्प्रेक्षितम् । बह्वेव सदृशं जलदसमयस्य । तथाहि ।

**बिभ्राणा मृदुतां शिरीषकुसुमश्रीहारिभिः शाद्वलैः**
**सद्यः कल्पितकुट्टिमा मरकतक्षोदैरिव क्षालितैः ।**
**एषा संप्रति बन्धनाद्विगलितैर्बन्धूकपुष्पोत्करै-**
**रद्यापि क्षितिरिन्द्रगोपकशतैश्छन्नेव संलक्ष्यते ॥ ३ ॥**

(ततः प्रविशति चेटी ।)

**चेटी**— आणत्तह्मि देवीए वासवदत्ताए—'हञ्जे इन्दीवरिए, अज्ज

**बिभ्राणेति** । शिरीषकुसुमानां श्रियं लक्ष्मीं हरन्ति अपहरन्तीति तैः शिरीषकुसुमेभ्योऽप्यतिमृदुभिरित्यर्थः । "शुकावलिर्व्यक्तशिरीषकोमला" इति भारविः । शाद्वलाः तृणहरितप्रदेशाः तैः । "शाद्वलः शादहरिते" इत्यमरः । मृदुतां मार्दवम् । बिभ्राणा । अत एव, सद्यः तदानीमेव । क्षालितैः निर्मृष्टैः । मरकतक्षोदैः मरकतखण्डैः । चूर्णवाच्यपि क्षोदशब्दः प्रकृते खण्डपरः । कल्पितः रचितः कुट्टिमः निबद्धा भूमिः यस्यास्सा तादृशीव । सद्यः कल्पितेत्येकं पदं वा । क्षालितैः मरकतक्षोदैरिव स्थितैः शाद्वलैः कल्पितकुट्टिमा अत एव मृदुतां बिभ्राणेति वा । एषा । क्षितिः भूमिः । संप्रति । बन्धनात् वृन्तात् । विगलितैः च्युतैः । बन्धूकपुष्पाणां रक्तवर्णानां पुष्पविशेषाणां उत्करैः समूहैः । इन्द्रगोपकानां रक्तवर्णानां कीटविशेषाणां शतैः । छन्ना आस्तृतेव । अद्यापि । संलक्ष्यते दृश्यते । **उत्प्रेक्षा** ॥ ३ ॥

हञ्जे— हञ्जे इति चेटीं प्रति सम्बोधनम् ।

"हण्डे हञ्जे हलाह्वानं नीचां चेटीं सखीं प्रति ।"

इत्यमरः ।

मए अगत्थिमहेसिणो अग्घो दादव्वो । ता गच्छ तुमम् । सेहालिआकुसुममालं लहु गेण्हिअ आअच्छ । एसा वि आरण्णिआ धाराघरुज्जाणदीहिआए जाव एव्व विअसिआइ कमलाइ ण अत्थाहिलासिणा सुज्जेण मउलाविज्जन्ति दाव एव्व लहुअं अवचिणुअ आअच्छदु ' त्ति । एसा तवस्सिणी तं दीहिअं ण जाणादि । ता गेण्हिअ तं गमिस्सं । (नेपथ्याभिमुखमवलोक्य) इदो इदो आरण्णिए एहि ।

आज्ञप्तास्मि देव्या वासवदत्तया— ' हञ्जे इन्दीवरिके, अद्य मया अगस्त्यमहर्षयेऽर्घो दातव्यः । तद्गच्छ त्वम् । शेफालिकाकुसुममालां लघु गृहीत्वागच्छ । एषाप्यारण्यका धारागृहोद्यानदीर्घिकाया यावदेव विकसितानि कमलानि नास्ताभिलाषिणा सूर्येण मुकुलाय्यन्ते तावदेव लघ्ववचित्यागच्छतु ' इति । एषा तपस्विनी तां दीर्घिकां न जानाति । तद्गृहीत्वा तां गमिष्यामि । इत इत आरण्यके एहि ।

---

अगस्त्यमहर्षये—

" अप्राप्ते भास्करे कन्यां शेषभूतैस्त्रिभिर्दिनैः ।
अर्घ्यं दद्युरगस्त्याय गौडदेशनिवासिनः ॥ "

इति ब्रह्मवैवर्ते ।

भीमपराक्रमेऽपि,

" यस्तु भाद्रपदस्यान्त उदिते कलशोद्भवे ।
अर्घ्यं दद्यादगस्त्याय सर्वान्कामान्लभेत सः ॥ " इति ।

आरण्यका अरण्यादागता । मुकुलाय्यन्ते मुकुलवदाचरन्ति क्रियन्ते, मुकुलितानि क्रियन्त इत्यर्थः । मुकुलशब्दादाचारक्यङन्ताण्णिचि ततः कर्मणि

## द्वितीयोऽङ्कः ।

( ततः प्रविशत्यारण्यका । )

**आरण्यका—** ( सबाष्पोद्वेगमात्मगतम् । ) तह णाम तारिसे वंसे उप्पण्णाए अण्णजणं आण्णाविअ ट्ठिदाए संपदं परस्स मए आणत्ती कादव्वेत्ति णत्थि खु दुक्खरं देव्वस्स। अहवा मह एव्व एसो दोसो । जेण जाणन्तीए वि ण वावादिओ अप्पा । ता किं संपदं करिस्सं । अहवा दुक्खरं दाणिं मए चिन्तिदं । वरं एव्व एदं वि । ण उण अप्पणो महग्घं वंसं पआसअन्तीए मए लहुईकिदो अप्पा । ता का गई । जह-भणिदं अणुचिट्ठिस्सं ।

तथा नाम तादृशे वंश उत्पन्नयान्यजनमाज्ञाप्य स्थितया सांप्रतं परस्य मयाज्ञप्तिः कर्तव्येति नास्ति खलु दुष्करं दैवस्य । अथवा ममैवैष दोषः । येन जानन्त्यापि न व्यापादित आत्मा । तत्किं सांप्रतं करिष्यामि । अथवा दुष्करमिदानीं मया चिन्तितम् । वरमेवैतदपि । न पुनरात्मनो महार्घं वंशं प्रकाशयन्त्या मया लघूकृत आत्मा । तत्का गतिः । यथाभणितमनुष्ठास्यामि ।

**चेटी—** इदो एहि आरण्णिए ।

इत एह्यारण्यके ।

---

लकारः । "लोहितादेराकृतिगणत्वाद्भवत्यर्थे क्यषि ततो णिचि कर्मणि लकारः" इति केचित् । तपस्विनी शोच्या दयनीयेत्यर्थः ।

वरं मनाक् प्रियम् । "मनागिष्टे वरं क्लीबं केचिदाहुस्तदव्ययम् ।" इति मेदिनी ।

**आरण्यका**— इअं आअच्छामि । (श्रमं नाटयन्ती ।) हञ्जे, दूरे किं अज्ज वि दीहिआ ।

इयमागच्छामि । हञ्जे, दूरे किमद्यापि दीर्घिका ।

**चेटी**— एसा सेहालिआगुम्मन्तरिआ । ता एहि । ओदरह्म । (अवतरणं नाटयतः ।)

एषा शेफालिकागुल्मान्तरिता । तदेहि । अवतरावः ।

**राजा**— वयस्य, किमन्यदिव चिन्तयसि । ननु ब्रवीमि । बह्वेव सदृशं जलदसमयस्य । (इति "बिभ्राणा मृदुताम्" इत्यादि पुनः पठति ।)

**विदूषकः**— (सक्रोधम् ।) भो तुमं दाव एदं अण्णं अ पेक्खन्तो उक्कण्ठाणिब्भरं विणोदेसि अप्पाणं । मम उण बह्मणस्स सोत्थिवाअणवेला अदिक्कमदि । ता दाव अहं तुवरिअं दीहिआए ण्हाइअ देवीए सआसं गमिस्सं ।

भोः, त्वं तावदेतदन्यच्च पश्यन्नुत्कण्ठानिर्भरं विनोदयस्यात्मानम् । मम पुनर्ब्राह्मणस्य स्वस्तिवायनवेलातिक्रामति । तत्तावदहं त्वरितं दीर्घिकायां स्नात्वा देव्याः सकाशं गमिष्यामि ।

**राजा**— ननु मूर्ख, पारं गता एव वयं दीर्घिकायाः । एवमनेकेन्द्रियसुखातिशयमनुभवन्नपि नोपलक्षयसि । पश्य ।

---

गुल्मः स्तम्बः । वयस्यः वयसा तुल्यः । "नौवयोधर्म" इत्यादिना यत् ।

**श्रोत्रं हंसस्वनोऽयं सुखयति दयितानूपुरह्लादकारी**
**दृष्टिप्रीतिं विधत्ते तटतरुविवरालक्षिता सौधपाली ।**
**गन्धेनाम्भोरुहाणां परिमलपटुना जायते घ्राणसौख्यं**
**गात्राणां ह्लादमेते विदधति मरुतो वारिसंपर्कशीताः ॥ ४ ॥**

तदेहि । दीर्घिकातटमुपसर्पावः । (परिक्रम्यावलोक्य च ।) वयस्य पश्य पश्य ।

**उद्यानदेवतायाः स्फुटपङ्कजकान्तिहारिणी स्वच्छा ।**
**दृष्टिरिव दीर्घिकेयं रमयति मां दर्शनेनैव ॥ ५ ॥**

**विदूषकः**— (सकौतुकम् ।) भो वअस्स पेक्ख पेक्ख । का एसा कुसुमपरिमलसुअन्धवेणीमहुअरावली विद्दुमलआरुण-

---

**श्रोत्रमिति** । दयितायाः प्रियायाः नूपुरह्लादं मञ्जीरशिञ्जितं करोतीति तादृशः तत्सदृश इत्यर्थः । हंसस्वनः हंसकूजितम् । श्रोत्रं कर्णं कर्णावित्यर्थः । "स्तनादीनां द्वित्वाविष्टा जातिः प्रायेण" इति वामनः । सुखयति आनन्दयति । तटे तीरे विद्यमानानां तरूणां विवरेण अन्तरेण आलक्षिता ईषद्दृष्टा । सौधपाली प्रासादपङ्क्तिः । दृष्टिप्रीतिं नेत्रप्रीतिम् । विधत्ते करोति । परिमलेन सौरभ्येण पटुना स्फुटेन । "पटुस्तीक्ष्णे स्फुटे दक्षे निष्ठुरे निर्दयेऽपि च ।" इति रुद्रः । अम्भोरुहाणां पद्मानाम् । गन्धेन आमोदेन । घ्राणसौख्यं नासिकाप्रीतिः । जायते । वारिसंपर्केण जलसंस्पर्शेन शीताः । एते । मरुतः वाताः । गात्राणां अवयवानाम् । ह्लादं सुखम् । विदधति कुर्वन्ति ॥ ४ ॥

**उद्यानेति** । स्फुटानां विकसितानां पङ्कजानां पद्मानां कान्तिभिः हारिणी मनोहरा, दृष्टिपक्षे स्फुटपङ्कजस्य कान्तिं हरतीति तादृशी तत्सदृशीत्यर्थः । स्वच्छा निर्मला । अत एव, उद्यानदेवतायाः वनदेवतायाः । दृष्टिः नेत्रमिव स्थिता । इयं दीर्घिका वापी । दर्शनेनैव दर्शनमात्रेण । रमयति संतोषयति ॥ ५ ॥

वेणिः केशबन्धः । विद्रुमः प्रवालः ।

हत्थपल्लवा उज्जुलुन्ततणुकोमलबाहुलदा सच्चं पच्चक्खचरी विअ उज्जाणदेवदा इत्थिआ दीसइ ।

भो वयस्य, पश्य पश्य । कैषा कुसुमपरिमलसुगन्धवेणिमधुकरावलिर्विद्रुमलतारुणहस्तपल्लवा उज्ज्वलत्तनुकोमलबाहुलता सत्यं प्रत्यक्षचरीवोद्यानदेवता स्त्री दृश्यते ।

**राजा**— (सकौतुकं विलोक्य ।) वयस्य, निरतिशयस्वरूपशोभाजनितबहुविकल्पेयम् । यत्सत्यमहमपि नावगच्छामि । पश्य ।

**पातालाद्भुवनावलोकनपरा किं नागकन्योत्थिता**
**मिथ्या तत्खलु दृष्टमेव हि मया तस्मिन्कुतोऽस्तीदृशी ।**
**मूर्ता स्यादिह कौमुदी न घटते तस्या दिवा दर्शनं**
**केयं हस्ततलस्थितेन कमलेनालोक्यते श्रीरिव ॥ ६ ॥**

**विदूषकः**— (निरूप्य ।) एसा क्खु देवीए परिआरिआ इन्दीवरिआ । ता गुम्मन्तरिआ भविअ पेक्खह्म ।

---

तनुः कृशा । यत्सत्यं नियतम् । यत्सत्यमित्यखण्डमव्ययं नियतार्थकमिति प्रामाणिकाः ।

**पातालादिति** । नागकन्या सर्पकन्यका । भुवनस्य भूलोकस्य अवलोकने दर्शने परा आसक्ता सती । पातालात् । उत्थिता ऊर्ध्वंगता किम् । मिथ्या मया विचारितं न सत्यं भवितुमर्हतीत्यर्थः । हि यतः । तत् पातालम् । मया । दृष्टं एव खलु । तस्मिन् पाताले । ईदृशी एतत्समाना स्त्री । कुतः अस्ति नास्तीत्यर्थः । इह । मूर्ता शरीरिणी । कौमुदी चन्द्रिका स्यात् भवेत् किम् । संभावनायां लिङ् । तस्याः कौमुद्याः । दिवा अह्नि । दर्शनम् । न घटते न संभवति । हस्ततले स्थितेन । कमलेन पद्मेन । श्रीः लक्ष्मीरिव । आलोक्यते लक्ष्यते । इयं का ॥ ६ ॥

एषा खलु देव्याः परिचारिकेन्दीवरिका । तद्गुल्मान्तरितौ भूत्वा पश्यावः ।

( उभौ तथा कुरुतः । )

**चेटी**— ( कमलिनीपत्रग्रहणं नाटयन्ती । ) आरण्णिए, अवइणु तुमं पदुमाइ । अहं वि एदस्सिं णलिनीपत्तम्मि सेहालिआकुसुमाइ अवइणुअ देवीसआसं गमिस्सं ।

आरण्यके, अवचिनु त्वं पद्मानि । अहमप्येतस्मिन्नलिनीपत्रे शेफालिकाकुसुमान्यवचित्य देवीसकाशं गमिष्यामि ।

**राजा**— वयस्य, सल्लाप इव वर्तते । तदवहिताः शृणुमः । कदाचिदित एव व्यक्तीभविष्यति ।

( चेटी गमनं नाटयति । )

**आरण्यका**— हला इन्दीवरिए, ण सक्कुणोमि तुए विणा एत्थ आसिदुं ।

हला इन्दीवरिके, न शक्नोमि त्वया विनात्रासितुम् ।

**चेटी**— ( विहस्य । ) जारिसं अज्ज मए देवीए मन्तिदं सुदं, तारिसेण चिरं एव्व मए विणा तुए आसिदव्वं ।

यादृशमद्य मया देव्या मन्त्रितं श्रुतम् , तादृशेन चिरमेव मया विना त्वयासितव्यम् ।

**आरण्यका**— ( सविषादम् । ) किं देवीए मन्तिदं ?

किं देव्या मन्त्रितम् ?

**चेटी**— एदं। "तदा एसा अहं महाराएण भणिदा, जह 'जदा एसा विञ्झकेदुदुहिदा वरजोग्गा भविस्सदि तदा अहं सुमराइदव्वो' त्ति। ता संपदं महाराअं सुमरावेमि। जेण से वरचिन्तापज्जाउलो भविस्सदि।"

एतत्। "तदैषाहं महाराजेन भणिता, यथा 'यदैषा विन्ध्यकेतुदुहिता वरयोग्या भविष्यति तदाहं स्मारयितव्यः।' इति। तत्सांप्रतं महाराजं स्मारयामि येनास्या वरचिन्तापर्याकुलो भविष्यति।"

**राजा**— (सहर्षम्।) इयं सा विन्ध्यकेतोर्दुहिता। (सानुतापम्।) चिरं मुषिताः स्मो वयम्। वयस्य, निर्दोषदर्शना कन्यका खल्वियम्। विश्रब्धमिदानीं पश्यामः।

**आरण्यका**— (सरोषं कर्णौ पिधाय।) ता गच्छ तुमं। ण तुए असंबद्धप्पलाविणीए पओअणं।

तद्गच्छ त्वम्। न त्वयासंबद्धप्रलापिन्या प्रयोजनम्।

(चेट्यपसृत्य पुष्पावचयं नाटयति।)

**राजा**— अहो सुतरां प्रकटीकृतमाभिजात्यं धीरतया। वयस्य, धन्यः खल्वसौ य एतदङ्गस्पर्शसुखभाजनं भविष्यति।

(आरण्यका कमलावचयं नाटयति।)

---

मुषिताः वञ्चिताः "गान्धार्या वा महाबाहो मुषितोऽस्मि महात्मभिः।" इति भागवतश्लोके "मुषितो वञ्चितोऽस्मि" इति श्रीधरः। निर्दोषं दर्शनं यस्यास्सा निर्दोषदर्शना। "कन्यका हि निर्दोषदर्शना भवन्ति" इति नागानन्दे। "साधारण्यान्निरातङ्कः कन्यामन्योऽपि याचते।" इति वीरचरितम्।

**विदूषकः**— भो वअस्स, पेक्ख पेक्ख । अच्चरिअं अच्चरिअं । एसा सलिलचलन्तकरपल्लवप्पहाविवित्थिदेण ओहसिअसोहं करेदि कमलवणं अवचिणन्ती ।

भो वयस्य, पश्य पश्य । आश्चर्यमाश्चर्यम् । एषा सलिलचलत्करपल्लवप्रभाविस्तृतेनापहसितशोभं करोति कमलवनमवचिन्वती ।

**राजा**— वयस्य, सत्यमेवैतत् । पश्य ।

अच्छिन्नामृतबिन्दुवृष्टिसदृशीं प्रीतिं ददत्या दृशा
याताया विगलत्पयोधरपटाद्द्रष्टव्यतां कामपि ।
अस्याश्चन्द्रमसस्तनोरिव करस्पर्शास्पदत्वं गता
नैते यन्मुकुलीभवन्ति सहसा पद्मास्तदेवाद्भुतम् ॥ ७ ॥

**आरण्यका**— (भ्रमरसंबाधं नाटयन्ती ।) हद्धि हद्धि । एदे क्खु अवरे परिच्चइअ कमलिणीं णीलुप्पलवणाइ समापडन्ता णि-

विस्तृतं विस्तारः प्रसरणमित्यर्थः ।

**अच्छिन्नेति** । दृशा नेत्रेण । अच्छिन्नायाः अविच्छेदेन प्रवृत्तायाः अमृतबिन्दुवृष्टेः सुधाशीकरवर्षस्य सदृशीं तुल्याम् । प्रीतिं सन्तोषम् । ददत्याः प्रदिशन्त्याः । विगलन् च्यवमानः यः पयोधरपटः स्तनोत्तरीयं कञ्चुलिका वा तस्मात् स्तनोत्तरीयविगलनादिति यावत् । चन्द्रमःपक्षे विगलन् पयोधरः मेघ एव पटः तस्मात् । कामपि अनिर्वचनीयाम् । द्रष्टव्यतां दर्शनीयतां रमणीयतामित्यर्थः । यातायाः प्राप्तायाः । अस्याः स्त्रियाः । चन्द्रमसः चन्द्रस्य । तनोः मूर्तेरिव । करस्पर्शस्य हस्तसंसर्गस्य, पक्षे किरणसंपर्कस्य आस्पदत्वं विषयताम् । गताः प्राप्ताः । एते पद्माः कमलानि । "वा पुंसि पद्मम्" इत्यमरः । सहसा सत्वरम् । न मुकुलीभवन्तीति यत्, तदेव अद्भुतं आश्चर्यम् । चन्द्रकिरणसंपर्के पद्मानां निर्मीलनौचित्यादतथाभावो विस्मयावह इति भावः ॥ ७ ॥

उणअरं बाधन्ता आआसअन्ति मं दुट्ठमहुअरा । ( उत्तरीयेण मुखं विधाय सभयम् । ) हला इन्दीवरिए, परित्ताएहि मं परित्ताएहि मं । एदे दुट्ठमहुअरा परिभविस्सन्ति ।

हा धिक् हा धिक् । एते खल्वपरे परित्यज्य कमलिनीं नीलोत्पलवनानि समापतन्तो निपुणतरं बाधमाना आयासयन्ति मां दुष्टमधुकराः । हला इन्दीवरिके, परित्रायस्व मां परित्रायस्व माम् । एते दुष्टमधुकराः परिभविष्यन्ति ।

**विदूषकः**—भो वअस्स, पुण्णा दे मणोरहा । जाव एव्व गब्भदासीए सुदा ण आअच्छदि, दाव एव्व तुमं वि तुण्हीको भविअ उवसप्प । एसा वि सलिलसद्दसुणिदेण पदसंचारेण इन्दीवरिआ आअच्छदित्ति जाणिअ तुमं एव्व ओलम्बिस्सदि ।

भो वयस्य, पूर्णास्ते मनोरथाः । यावदेव गर्भदास्याः सुता नागच्छति, तावदेव त्वमपि तूष्णीको भूत्वोपसर्प । एषापि सलिलशब्दश्रुतेन पदसंचारेणेन्दीवरिकागच्छतीति ज्ञात्वा त्वामेवावलम्बिष्यते ।

**राजा**—साधु वयस्य साधु । कालानुरूपमुपदिष्टम् । ( इत्यारण्यकासमीपमुपसर्पति । )

---

अपरे अन्ये दस्युभ्यो व्यतिरिक्ता इत्यर्थः । समापतन्तः संभूयागच्छन्तः । मधुकराः भृङ्गाः, मद्यपायिनश्च । परिभविष्यन्ति आक्रमिष्यन्ति । गर्भादारभ्य दासी गर्भदासी, या वंशपरम्परया दास्यवृत्तिमाचरति सेयमेवमुच्यते । तूष्णीकः मौनी । "तूष्णींशीलस्तु तूष्णीकः" इत्यमरः ।

**आरण्यका**—( पदशब्दाकर्णनं नाटयन्ती । ) इन्दीवरिए, लहु उवसप्प लहु उवसप्प । आउलीकिदह्मि दुट्ठमहुअरेहिं । ( राजानमवलम्बते । )

इन्दीवरिके, लघूपसर्प लघूपसर्प । आकुलीकृतास्मि दुष्टमधुकरैः ।

( राजा कण्ठे गृह्णाति । आरण्यकोत्तरीयं मुखादपनीय राजानमपश्यन्ती भ्रमरावलोकनं नाटयति । )

**राजा**—( स्वोत्तरीयेण भ्रमरान्निवारयन् । )

**अयि विसृज विषादं भीरु भृङ्गास्तवैते**
**परिमलरसलुब्धा वक्त्रपद्मे पतन्ति ।**
**विकिरसि यदि भूयस्त्रासलोलायताक्षी**
**कुवलयवनलक्ष्मीं तत्कुतस्त्वां त्यजन्ति ॥ ८ ॥**

**आरण्यका**—( राजानं दृष्ट्वा साध्वसं नाटयन्ती । ) कहं ण एसा इन्दीवरिआ । ( सभयं राजानं त्यक्त्वापसरन्ती । ) इन्दीवरिए, लहु आअच्छ लहु आअच्छ । परित्ताएहि मं ।

---

लघु शीघ्रम् ।

**अयीति** । अयि भीरु भयशीले । विषादं भयजन्यमवसादम् । विसृज त्यज । एते भृङ्गाः । परिमलरसे सौगन्ध्यास्वादे लुब्धाः सतृष्णाः सन्तः । तव । वक्त्रपद्मे मुखारविन्दे । पतन्ति । त्वं, त्रासेन भीत्या लोले तरले आयते दीर्घे अक्षिणी नेत्रे यस्यास्सा तथोक्ता सती । भूयः प्राचुर्येण । पुनः पुनरिति वा । कुवलयवनस्य उत्पलषण्डस्य लक्ष्मीं शोभाम् । विकिरसि यदि विक्षिपसि चेत् । तत् तदा । त्वां भवतीम् । कुतः । त्यजन्ति । पूर्वं परिमललोभः, संप्रति तु कुवलयवनभ्रमश्चेति संपूर्णमस्ति तेषां पतनकारणमिति भावः । **निदर्शना भ्रान्तिमांश्च** ॥ ८ ॥

कथं नैषेन्दीवरिका । इन्दीवरिके, लघ्वागच्छ लघ्वागच्छ । परित्रायस्व माम् ।

**विदूषकः**— होदि, सअलपुडवीपरित्ताणसमत्थेण वच्छराएण परित्ताअन्ती चेडिं इन्दीवरिअं आक्कन्देसि ।

भवति, सकलपृथ्वीपरित्राणसमर्थेन वत्सराजेन परित्रायमाणा चेटीमिन्दीवरिकामाक्रन्दसि ।

(राजा "अयि विसृज–" इत्यादि पुनः पठति ।)

**आरण्यका**— (राजानमवलोक्य सस्पृहं सलज्जं चात्मगतम् ।) अअं क्खु सो महाराओ जस्स अहं तादेण दिण्णा । ठाणे क्खु तादस्स पक्खवादो । (आकुलतां नाटयति ।)

अयं खलु स महाराजो यस्याहं तातेन दत्ता । स्थाने खलु तातस्य पक्षपातः ।

**चेटी**—आआसिआ क्खु आरण्णिआ दुट्ठमहुअरेहिं ता जाव उवसप्पिअ समस्सासेमि । आरण्णिए, मा भआहि । एसा उवाअदम्हि ।

आयासिता खल्वारण्यका दुष्टमधुकरैः । तद्यावदुपसृप्य समाश्वासयामि । आरण्यके, मा बिभिहि । एषोपागतास्मि ।

**विदूषकः**— भो ओसर ओसर । एसा क्खु इन्दीवरिआ आअदा । ता एदं उत्तन्तं पेक्खिअ देवीए णिवेदइस्सदि ।

स्थाने युक्तः । अव्ययमेतत्

(अङ्गुल्या निर्दिश्य ।) ता इमं एव्व कदलीघरं पविसिअ मुहुत्तं चिट्ठह्म ।

भोः अपसरापसर । एषा खल्विन्दीवरिकागता । तदेतं वृत्तान्तं प्रेक्ष्य देव्यै निवेदयिष्यति । तदिदमेव कदलीगृहं प्रविश्य मुहूर्तं तिष्ठावः ।

(उभौ तथा कुरुतः ।)

**चेटी**— (उपसृत्य कपोलौ स्पृशन्ती ।) हञ्जे आरण्णिए, कमलसरिसस्स तुह वअणस्स अअं दोसो जं महुअरा एव्वं अवरज्झन्ति । (हस्ते गृहीत्वा ।) ता एहि गच्छह्म । परिणदो दिअहो ।

हञ्जे आरण्यके, कमलसदृशस्य तव वदनस्यायं दोषो यन्मधुकरा एवमपराध्यन्ति । तदेहि गच्छावः । परिणतो दिवसः ।

(गमनं नाटयतः ।)

**आरण्यका**— (कदलीगृहाभिमुखमवलोक्य ।) हञ्जे इन्दीवरिए, अदिसिसिरदाए सलिलस्स ऊरुत्थम्भो विअ समुप्पण्णो । ता सणिअं सणिअं गच्छह्म ।

हञ्जे इन्दीवरिके, अतिशिशिरतया सलिलस्योरुस्तम्भ इव समुत्पन्नः । तच्छनैः शनैर्गच्छावः ।

**चेटी**— तह । तथा ।

(इति निष्क्रान्ते ।)

ऊरुस्तम्भः ऊर्वोश्चलनाशक्तत्वम् ।

**विदूषकः**— भो एहि णिक्कमह्म । तं गेण्हिअ एसा दासीए सुदा इन्दीवरिआ गदा ।

भोः एहि निष्क्रामावः । तां गृहीत्वैषा दास्याः सुतेन्दीवरिका गता ।

**राजा**— ( निःश्वस्य । ) कथं गता । सखे वसन्तक, नखल्वविघ्नमभिलषितमधन्यैः प्राप्यते । ( विलोक्य । ) सखे पश्य पश्य ।

**आबद्धमुखमपीदं कण्टकितं कमलकाननं तस्याः ।**
**सुकुमारपाणिपल्लवसंस्पर्शसुखं कथयतीव ॥ ९ ॥**

( निःश्वस्य । ) सखे, क इदानीमुपायः पुनस्तां द्रष्टुम् ।

**विदूषकः**— भो तुमं एव्व पुत्तलिअं भञ्जिअ दाणिं रोदिसि ण मे मुक्खस्स बह्मणस्स वअणं करेसि ।

भोः त्वमेव पुत्तलिकां भङ्क्त्वेदानीं रोदिपि । न मे मूर्खस्य ब्राह्मणस्य वचनं करोषि ।

**राजा**— किं मया न कृतम् ।

नखल्विति विशिष्टमेकपदमव्ययम् । " अहो विघ्नवत्यः खलु प्रार्थितार्थसिद्धयः । " इति शाकुन्तलम् ।

**आबद्धेति** । आबद्धं मुकुलितं मुखं कमलरूपं नयनं यस्य तादृशम् । अत्र मुखशब्देन नेत्रमुच्यते । इदं कमलकाननं पद्मवनमपि । आबद्धमुखं मुकुलितमपीति वा । कण्टकितं कण्टकविशिष्टम्, पुलकितं च सत् । तस्याः । सुकुमारस्य मृदोः पाणिपल्लवस्य हस्तपल्लवस्य संस्पर्शेन जायमानं सुखं आनन्दम् । कथयति शंसतीव । नेत्रनिमीलनं पुलकोद्गमश्च सुखानुभवस्य चिह्नं हीत्यहो निश्चेतनस्यापि कमलवनस्येयमीदृशी समवस्थेति भावः ॥ ९ ॥

**विदूषकः**—तं दाणिं विसुमरिदं । जं तुण्हीको भविअ उवसप्पेत्ति मए भणिदं । अदिसंकडे भवं पविसिअ अलिअपण्डिच्च-दुव्विदद्धदाए "अइ विसिज विसादं" त्ति एदेहिं अण्णेहिं अ कडुअवअणेहिं णिब्भच्छिअ संपदं किं रोदिसि । पुणो वि उवाअं पुच्छसि ।

तदिदानीं विस्मृतम् । यत् तूष्णीको भूत्वोपसर्पेति मया भणितम् । अतिसङ्कटे भवान्प्रविश्यालीकपाण्डित्यदु-र्विदग्धतया "अयि विसृज विषादम्" इत्येतैरन्यैश्च कटुवचनैर्निर्भर्त्स्य सांप्रतं किं रोदिषि । पुनरप्युपायं पृच्छसि ।

**राजा**— कथं समाश्वासनमपि निर्भर्त्सितमिति भणितं मूर्खेण ।

**विदूषकः**— जाणिदं एव्व को एत्थ मुक्खोत्ति । ता किं एदेण । अत्थमआहिलासी भअवं सहस्सरस्सी । ता एहि अब्भन्तरं एव्व पविसह्म ।

ज्ञातमेव कोऽत्र मूर्ख इति । तत्किमेतेन । अस्तमया-भिलाषी भगवान्सहस्ररश्मिः । तदेह्यभ्यन्तरमेव प्रविशावः ।

**राजा**— (विलोक्य) अये, परिणतप्रायो दिवसः । अहह । संप्रति हि ।

---

दुर्विदग्धतया दृप्ततया । कटूनि तीक्ष्णानि । निर्भर्त्स्य भीषयित्वा । परिण-तप्रायः भूयसा परिणतः सन्ध्यासमासन्न इत्यर्थः ।

हृत्वा पद्मवनद्युतिं प्रियतमेवेयं दिनश्रीर्गता
रागोऽस्मिन्मम चेतसीव सवितुर्बिम्बेऽधिकं लक्ष्यते ।
चक्राह्वोऽहमिव स्थितः सहचरीं ध्यायन्नलिन्यास्तटे
संजाताः सहसा ममेव भुवनस्याप्यन्धकारा दिशः ॥ १० ॥

[इति निष्क्रान्ताः सर्वे ।

## इति द्वितीयोऽङ्कः ।

---

**हृत्वेति** । इयं दिनश्रीः दिनलक्ष्मीः । पद्मवनस्य द्युतिं कान्तिम् । हृत्वा । प्रियतमा प्रेयसी विन्ध्यकेतुदुहितेव । गता । अस्मिन् । सवितुः सूर्यस्य । बिम्बे मण्डले । मम । चेतसि मनसीव । रागः रक्तिमा, अनुरागश्च । अधिकं लक्ष्यते दृश्यते । अयं चक्राह्वः चक्रवाकः । अहं इव । सहचरीं प्रियाम् । ध्यायन् चिन्तयन् सन् । नलिन्याः दीर्घिकायाः । तटे तीरे । स्थितः । दिशः ककुभः । मम इव । भुवनस्य लोकस्यापि । अन्धकाराः अन्धकारविशिष्टाः द्रष्टुमशक्या इत्यर्थः । सहसा । संजाताः । **उपमा** ।

इति द्वितीयाङ्कव्याख्या समाप्ता ॥



# तृतीयोऽङ्कः ॥

(ततः प्रविशति मनोरमा ।)

**मनोरमा**— आणत्तह्मि देवीए वासवदत्ताए—"हञ्जे मणोरमे, जो सो संगिच्चायणीए अज्जउत्तस्स मम अ उत्तन्दो णाडओवणिबद्धो, तस्स णच्चिदव्वसेसं अज्ज तुह्मेहिं कोमदीमहूसवे णच्चिदव्वं" त्ति । हिओ क्खु आरण्णिआए पिअसहीए सुण्णहिअआए अण्णहा एव्व णच्चिदं । अज्ज उण वासवदत्ताभूमिआए ताए जइ तह करीअदि तदो अवस्सं देवी कुप्पिस्सदि । ता कहिं दाव तं पेक्खिअ उवालम्भिस्सं । (विलोक्य ।) एसा आरण्णिआ अप्पणा एव्व किं वि किं वि मन्तअन्ती दिग्घिआतीले कदलीघरअं पविसदि । ता गुम्मन्तारिआ भविअ सुणिस्सं दाव से वीसद्धजप्पिदाणि ।

आज्ञप्तास्मि देव्या वासवदत्तया—"हञ्जे मनोरमे, यः स साङ्कृत्यायन्यार्यपुत्रस्य मम च वृत्तान्तो नाटकोपनिबद्धः, तस्य नर्तितव्यशेषमद्य युष्माभिः कौमुदीमहोत्सवे नर्तितव्यम्" इति । ह्यः खल्वारण्यकया प्रियसख्या शून्यहृदययान्यथैव नर्तितम् । अद्य पुनर्वासवदत्ताभूमिकया तया यदि तथा क्रियते ततोऽवश्यं देवी कोपिष्यति । तत्कुत्र तावत्तां प्रेक्ष्योपालप्स्ये । एषारण्यकात्म-

ह्यः अतीते दिने । उपालप्स्ये भर्त्सयिष्यामि ।

नैव किमपि किमपि मन्त्रयमाणा दीर्घिकातीरे कदली-गृहं प्रविशति । तद्गुल्मान्तरिता भूत्वा श्रोष्यामि ताव-दस्या विस्रब्धजल्पितानि ।

## इति प्रवेशकः ।

( ततः प्रविशत्यासनस्था कामावस्थां नाटयन्त्यारण्यका । )

**आरण्यका**— ( निश्वस्य । ) हिअअ, दुल्लहजणं पत्थअन्तो तुमं कीस मं दुक्खिदं करेसि ।

हृदय, दुर्लभजनं प्रार्थयमानं त्वं कस्मान्मां दुःखितां करोषि ।

**मनोरमा**— तं एदं सुण्णहिअअत्तणस्स कारणं । किं उण एसा पत्थेदि । अवहिदा दाव सुणिस्सं ।

तदेतच्छून्यहृदयत्वस्य कारणम् । किं पुनरेषा प्रार्थयते । अवहिता तावच्छ्रोष्यामि ।

**आरण्यका**— ( सास्रम् । ) कहं तह णाम सोहणदंसणो भविअ महाराओ एव्वं संदावेदि मं । अच्चरिअं अच्चरिअं । ( निश्वस्य ) अहवा मह एव्व एसा अभाअहेअदा । ण उण महाराअस्स दोसो ।

---

प्रवेशकः—

" प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः ।
अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा । "

इति तल्लक्षणम् ।

अस्रं अश्रु ।

कथं तथा नाम शोभनदर्शनो भूत्वा महाराज एवं संतापयति माम् । आश्चर्यमाश्चर्यम् । अथवा ममैवैषाभागधेयता । न पुनर्महाराजस्य दोषः ।

**मनोरमा**— (सबाष्पम् ।) कहं महाराओ एव्व से पत्थणिज्जो । साहु पिअसहि साहु । आभिजाअसरिसो दे अहिलासो ।

कथं महाराज एवास्याः प्रार्थनीयः । साधु प्रियसखि साधु । आभिजात्यसदृशस्तेऽभिलाषः ।

**आरण्यका**— कस्स दाव एदं उत्तन्तं णिवेदिअ सज्झवेअणं विअ दुक्खं करिस्सं । (विचिन्त्य) अहवा अत्थि मे हिअअणिव्विसेसा पिअसही मणोरमा । ताए वि एदं लज्जाए ण पारेमि कहिदुं । सव्वहा मरणं वज्जिअ कुदो मे हिअअस्स अण्णा णिव्वुदी ।

कस्मै तावदेतं वृत्तान्तं निवेद्य सह्यवेदनमिव दुःखं करिष्यामि । अथवा अस्ति मे हृदयनिर्विशेषा प्रियसखी मनोरमा । तस्या अप्येतल्लज्जया न पारयामि कथयितुम् । सर्वथा मरणं वर्जयित्वा कुतो मे हृदयस्यान्या निर्वृतिः ।

**मनोरमा**— (सास्रम् ।) हद्धि हद्धि । अदिभूमिं गदो से तवस्सिणीए अणुराओ । ता किं दाणिं एत्थ करिस्सं ।

---

आभिजात्यं कुलीनता ।

सह्यवेदनमिव—

"स्निग्धजनसंविभक्तं खलु दुःखं सह्यवेदनं भवति ।"

इति शाकुन्तलम् ।

निर्वृतिः आश्वासः ।

हा धिक् हा धिक् । अतिभूमिं गतोऽस्यास्तपस्विन्या अनुरागः । तत्किमिदानीमत्र करिष्यामि ।

**आरण्यका**— (साभिलाषम् ।) अअं सो उद्देसो, जस्सिं महुअरेहिं आआसिज्जन्ती ओलम्बिअ महाराएण समस्सासिदह्मि "भीरु मा भआहि" त्ति ।

अयं स उद्देशः, यस्मिन्मधुकरैरायास्यमानावलम्ब्य महाराजेन समाश्वासितास्मि "भीरु मा बिभीहि" इति ।

**मनोरमा**— (सहर्षम् ।) कहं एसा वि दिट्ठा महाराएण । सव्वहा अत्थि से जीविदस्स उवाओ । जाव उवसप्पिअ समस्सासेमि णं । (सहसोपसृत्य ।) जुत्तं णाम हिअअस्स वि लज्जिदुं ।

कथमेषापि दृष्टा महाराजेन । सर्वथास्त्यस्या जीवितस्योपायः । यावदुपसृत्य समाश्वासयाम्येनाम् । युक्तं नाम हृदयस्यापि लज्जितुम् ।

**आरण्यका**— (सलज्जमात्मगतम् ।) हद्धि हद्धि । सव्वं सुदं एदाए । ता एत्थ जुत्तं एव्व पआसइदुं (प्रकाशं हस्ते गृहीत्वा ।) पिअसहि, मा कुप्प मा कुप्प । लज्जा एत्थ अवरज्झदि ।

हा धिक् हा धिक् । सर्वं श्रुतमेतया । तदत्र युक्तमेव प्रकाशयितुम् । प्रियसखि, मा कुप्य मा कुप्य । लज्जात्रापराध्यति ।

---

तपस्विन्याः दयनीयायाः ।

**मनोरमा**— (सहर्षम् ।) सहि, अलं संकाए । एदं मे आअक्ख । सच्चं एव्व तुमं महाराएण दिट्ठा ण वेत्ति ।

सखि, अलं शङ्कया । एतन्मे आचक्ष्व । सत्यमेव त्वं महाराजेन दृष्टा न वेति ।

**आरण्यका**— (सलज्जमधोमुखी ।) सुदं एव्व पिअसहीए सव्वं ।

श्रुतमेव प्रियसख्या सर्वम् ।

**मनोरमा**— जइ दिट्ठा महाराएण तुमं ता अलं संतप्पिदेण । सो एव्व दाणिं दंसणोवाअपज्जाउलो हुविस्सदि ।

यदि दृष्टा महाराजेन त्वं तदलं सन्तापितेन । स एवेदानीं दर्शनोपायपर्याकुलो भविष्यति ।

**आरण्यका**— अअं सहीअणो पक्खवादेण मन्तेदि । अइ सहिपक्खवादिणि, देवीगुणणिअलणिबद्धे क्खु तस्सिं जणे कुदो एदं ।

अयं सखीजनः पक्षपातेन मन्त्रयते । अयि सखिपक्षपातिनि, देवीगुणनिगलनिबद्धे खलु तस्मिन् जने कुत एतत् ।

**मनोरमा**— (विहस्य ।) हला अपण्डिदे, कमळिणीबद्धाणुराओ

पक्षपातः स्नेहः । निगलः शृङ्खला ।

देवीगुण— "हला, देवीं चिन्तयित्वा न मे हृदयं विश्वसिति ।" इति मालविकाग्निमित्रम् ।

कमलिनिबद्ध— "मुग्धे भ्रमरसंबाध इति वसन्तावतारसर्वस्वभूतः किं न चूतप्रसवोऽवतंसनीयः ।" इति मालविकाग्निमित्रम् ।

वि महुअरो मालदीं पेक्खिअ अहिणवरसास्सादलम्पडो कुदो तं अणासादिअ ट्ठिदिं करेदि ।

हला अपण्डिते, कमलिनीबद्धानुरागोऽपि मधुकरो मालतीं प्रेक्ष्याभिनवरसास्वादलम्पटः कुतस्तामनासाद्य स्थितिं करोति ।

**आरण्यका**— किं एदिणा असंभाविदेण । ता एहि । अहिअं क्खु सरदादवेण संतप्पाइ अज्ज वि ण मे अङ्गाइ संदावं मुञ्चन्दि ।

किमेतेनासंभावितेन । तदेहि । अधिकं खलु शरदातपेन संतप्तान्यद्यापि न मेऽङ्गानि संतापं मुञ्चन्ति ।

**मनोरमा**— अइ लज्जालुए, ण जुत्तं एदं अवत्थं गदाए वि तुए अप्पा पच्छादिदुं ।

अयि लज्जालुके, न युक्तमेतामवस्थां गतयापि त्वया आत्मा प्रच्छादयितुम् ।

(आरण्यका मुखमवनमयति ।)

**मनोरमा**— अइ अविस्सम्भसीळे, किं दाणिं पच्छादेसि । णीसासणिहविणिग्गओ दिअहं रत्तिं वि तुज्झ अणुराओ अविरदपडन्तकुसुमसरसराणिवहप्पउत्तहुंकारसद्दो विअ ण भणइ ।

---

लज्जां लाति आदत्ते इति लज्जालुः, सैव लज्जालुका । मितद्र्वादित्वात्कृपाल्वादाविव डुः । अनुकम्पायां कः ।

"दिवसं रात्रिमपि" इति पाठः । दिवसरात्रमिति पाठस्तु चिन्त्यः । न भणतीति काकुः, भणत्येवेत्यर्थः ।

(आत्मगतम् ।) अहवा ण हु अअं कालो उवालम्भस्स । ता दाव णलिणीपत्ताइ से हिअए दाइस्सं । (उत्थाय दीर्घिकाया नलिनीपत्राणि गृहीत्वारण्यकाया हृदये ददती ।) समस्ससदु सही समस्ससदु ।

अयि अविस्रम्भशीले, किमिदानीं प्रच्छादयसि । निश्वासनिभविनिर्गतो दिवसं रात्रिमपि तवानुरागोऽविरतपतत्कुसुमशरशरनिवहप्रवृत्तहुङ्कारशब्द इव न भणति । अथवा न खल्वयं काल उपालम्भस्य । तत्तावन्नलिनीपत्राण्यस्या हृदये दास्यामि । समाश्वसितु सखी समाश्वसितु ।

(ततः प्रविशति विदूषकः ।)

**विदूषकः**— अदिमहन्तो क्खु पिअवअस्सस्स आरण्णिआए उवरि अणुराओ । जेण परिच्चत्तराअकज्जो ताए एव्व दंसणोवाअं चिन्तअन्तो अप्पाणं विणोदेइ । (विचिन्त्य ।) कहिं दाणिं तं पेक्खामि । अहवा तहिं दिग्घिआए अण्णेसामि । (परिक्रामति ।)

अतिमहान्खलु प्रियवस्यस्यारण्यकाया उपर्यनुरागः । येन परित्यक्तराजकार्यस्तस्या एव दर्शनोपायं चिन्तयन्नात्मानं विनोदयति । कुत्रेदानीं तां प्रेक्षे । अथवा तत्र दीर्घिकायामन्विष्यामि ।

**मनोरमा**— (आकर्ण्य ।) पदसद्दो विअ सुणीअदि । ता कदलीगुम्मन्तरिदा भविअ पेक्खह्म दाव को एसोत्ति ।

पदशब्द इव श्रूयते। तत्कदलीगुल्मान्तरिते भूत्वा पश्या-
वस्तावत्क एष इति।

(उभे तथा कृत्वा पश्यतः।)

**आरण्यका**— कहं सो एव्व महाराअस्स पस्सपरिवट्टी बह्मणो।
कथं स एव महाराजस्य पार्श्वपरिवर्ती ब्राह्मणः।

**मनोरमा**— कहं वसन्तओ एव्व। (सहर्षमात्मगतम्।) अवि णाम
तह हवे।

कथं वसन्तक एव। अपि नाम तथा भवेत्।

**विदूषकः**— (दिशोऽवलोक्य।) किं दाणिं आरण्णिआ सच्चं एव्व
संवुत्ता।

किमिदानीमारण्यका सत्यमेव संवृत्ता।

**मनोरमा**— (सस्मितम्।) सहि, राअवअस्सो क्खु बह्मणो तुमं
उद्दिसिअ मन्तेदि। ता दाव अवहिदा सुणह्म।

सखि, राजवयस्यः खलु ब्राह्मणस्त्वामुद्दिश्य मन्त्रयते।
तत्तावदवहिते शृणुवः।

(आरण्यका सस्पृहं सलज्जं च शृणोति।)

**विदूषकः**— (सोद्वेगम्।) जदा दाव मए गुरुअमअणसंदावणीस-
हस्स पिअवअस्सस्स अस्सत्थवअणेण देवीणं वासवदत्तापदु-
मावदीणं अण्णाणं अ देवीणं भवणाइ अण्णेसन्तेण ण सा
दिट्ठा, तदा जहिं दिग्घिआए दिट्ठा एदं वि दाव पेक्खिस्सं
ति आअदोह्मि। ता जाव इह णत्थि। किं दाणिं करिस्सं।

यदा तावन्मया गुरुमदनसंतापनिस्सहस्य प्रियवयस्यस्या-स्वस्थवचनेन देव्योर्वासवदत्तापद्मावत्योरन्यासां च देवीनां भवनान्यन्विष्यता न सा दृष्टा, तदा यत्र दीर्घि-कायां दृष्टा एतामपि तावत्प्रेक्षिष्य इत्यागतोऽस्मि । तद्यावदिहापि नास्ति । किमिदानीं करिष्ये ।

**मनोरमा**— सुदं पिअसहीए ?

श्रुतं प्रियसख्या ?

**विदूषकः**— (विचिन्त्य ।) अहवा भणिदो एव्व अहं वअस्सेण—"जइ तं अण्णेसन्तो ण पेक्खसि, ता तदो वि दाव दिग्घि-आदो ताए करअलप्परिसदिउणिअसुहसीअलाइ णलिणीपत्ताइ गेण्हिअ आअच्छ" त्ति । ता कहं एदाइ जाणिदव्वाइ ।

अथवा भणित एवाहं वयस्येन—"यदि तामन्विष्यन्न प्रेक्षसे, तत्ततोऽपि तावद्दीर्घिकातस्तस्याः करतलस्पर्श-द्विगुणितसुखशीतलानि नलिनीपत्राणि गृहीत्वागच्छ" इति । तत्कथमेतानि ज्ञातव्यानि ।

**मनोरमा**— अअं मे अवसरो । (उपसृत्य विदूषकं हस्ते गृहीत्वा ।) वसन्तअ, एहि । अहं दे जाणावेमि ।

अयं ममावसरः । वसन्तक, एहि । अहं ते ज्ञापयामि ।

**विदूषकः**— (सभयम् ।) कस्स तुमं जाणावेसि । किं देवीए । ण हु मए किं वि मन्तिदं ।

कस्य त्वं ज्ञापयसि । किं देव्याः । न खलु मया किमपि मन्त्रितम् ।

**मनोरमा**— वसन्तअ, अलं संकाए। जादिसी आरण्णिआए किदे अत्तणो पिअवअस्सस्स अवत्था तुए वण्णिदा, तदो दिउणदरा भट्टिणो वि किदे मह पिअसहीए अवत्था। ता पेक्ख पेक्ख। (उपसृत्यारण्यकां दर्शयति।)

वसन्तक, अलं शङ्कया। यादृश्यारण्यकायाः कृते आत्मनः प्रियवयस्यस्यावस्था त्वया वर्णिता, ततो द्विगुणतरा भर्तुरपि कृते मम प्रियसख्या अवस्था। तत्पश्य पश्य।

**विदूषकः**— (दृष्ट्वा सहर्षम्।) सफळो मे परिस्समो। सोत्थि होदीए।

सफलो मे परिश्रमः। स्वस्ति भवत्यै।

(आरण्यका सलज्जं कमलिनीपत्राण्यपनीयोत्तिष्ठति।)

**मनोरमा**— अज्ज वसन्तअ, तुह दंसणेण एव्व अवगदो पिअसहीए संदावो, जेण सयं एव्व णलिणीपत्ताइ अवणेदि। ता अणुगिण्हादु अज्जो इमाइ।

आर्य वसन्तक, तव दर्शनेनैवापगतः प्रियसख्याः संतापः, येन स्वयमेव नलिनीपत्राण्यपनयति। तदनुगृह्णात्वार्य इमानि।

**आरण्यका**— (सावेगम्।) अइ परिहाससीळे, कीस मं लज्जावेसि।

अयि परिहासशीले, कस्मान्मां लज्जयासि।

कृते इति निमित्तार्थकमव्ययम्।

**विदूषकः**— ( सविषादम् । ) चिट्ठन्दु दाव णलिनीपत्ताइ । अदिलज्जालुआ दे पिअसही । ता कहं एदाणं समाअमो हविस्सदि ।

तिष्ठन्तु तावन्नलिनीपत्राणि । अतिलज्जालुका ते प्रियसखी । तत्कथमेतयोः समागमो भविष्यति ।

**मनोरमा**— ( क्षणं विचिन्त्य सहर्षम् । ) वसन्तअ, एव्वं विअ । ( कर्णे कथयति । )

वसन्तक, एवमिव ।

**विदूषकः**— साहु पिअसहि साहु । ( अपवार्य । ) जाव एव्व तुह्मे णेवच्छग्गहणं करेत्थ, दाव एव्व अहं वि वअस्सं गेण्हिअ आअच्छामि । ( इति निष्क्रान्तः । )

साधु प्रियसखि साधु । यावदेव युवां नेपथ्यग्रहणं कुरुथः, तावदेवाहमपि वयस्यं गृहीत्वागच्छामि ।

**मनोरमा**— अदिकोवणे, उट्ठेहि उट्ठेहि । णच्चिदव्वं अह्मेहिं तस्स एव्व णाडअस्स णच्चिदसेसं । ता एहि । पेक्खाघरं एव्व गच्छह्म । ( परिक्रम्यावलोक्य । ) इदं पेक्खागारं । जाव एहि पविसह्म । ( प्रविश्यैकेनावलोक्य । ) साहु साहु । सव्वं सज्जीकिदं । देवीए आअन्तव्वं ।

अतिकोपने, उत्तिष्ठोत्तिष्ठ । नर्तितव्यमस्माभिस्तस्यैव नाटकस्य नर्तितशेषम् । तदेहि । प्रेक्षागृहमेव गच्छावः ।

प्रेक्षागृहं नाट्यशाला ।

इदं प्रेक्षागारम् । यावदेहि प्रविशावः । साधु साधु । सर्वं सज्जीकृतम् । देव्यागन्तव्यम् ।

(ततः प्रविशति देवी सांकृत्यायनी विभवतश्च परिवारः ।)

**वासवदत्ता**— भअवदि, अहो दे कवित्तणं । जेण एदं गूढउत्तन्तं णाडओवणिवद्धं साणुभवं वि अह्माणं अज्जउत्तचरिदं अदिट्ठपुव्वं विअ दीसयन्तं अहिअअरं कोदूहलं वड्ढअदि ।

भगवति, अहो ते कवित्वम् । येनैतद्गूढवृत्तान्तं नाटकोपनिबद्धं सानुभवमप्यस्माकमार्यपुत्रचरितमदृष्टपूर्वमिव दृश्यमानमधिकतरं कौतूहलं वर्धयति ।

**साङ्कृत्यायनी**— आयुष्मति, आश्रयगुण एवायमीदृशः । यदसारमपि काव्यमवश्यमेव शृण्वतां श्रवणसुखमुत्पादयति । पश्य ।

**प्रायो यत्किंचिदपि प्राप्नोत्युत्कर्षमाश्रयान्महतः ।**
**मत्तेभकुम्भतटगतमेति हि शृङ्गारतां भस्म ॥ १ ॥**

यदसारमपि—

"कवेरल्पापि वाग्वृत्तिर्विद्वत्कर्णावतंसति ।
नायको यदि वर्ण्येत लोकोत्तरगुणोत्तरः ॥"

इति भोजराजः ।

**प्राय इति** । यत्किंचित् असारं वस्त्वपि । महतः । आश्रयात् संबन्धात् । उत्कर्षं श्रेष्ठताम् । प्रायः प्रायेण । प्राप्नोति । भस्म भसितम् । मत्तेभस्य मत्तगजस्य कुम्भतटं कुम्भस्थलं गतं सत् । शृङ्गारतां मण्डनत्वम् । "शृङ्गारो गजमण्डने ।" इति हैमः । एति हि । "गुणवज्जनसंपर्काद्याति

**वासवदत्ता**— (सस्मितम् ।) भअवदि, सव्वस्स वल्लहो जामादा होदित्ति जाणीअदि एव्व एदं । ता किं एदिणा कहाणुबन्धेण । वरं तं एव्व णच्चिदव्वं दट्ठुं ।

भगवति, सर्वस्य वल्लभो जामाता भवतीति ज्ञायत एवैतत् । तत्किमेतेन कथानुबन्धेन । वरं तदेव नर्तितव्यं द्रष्टुम् ।

**साङ्कृत्यायनी**— एवम् । इन्दीवरिके, प्रेक्षागृहमादेशय ।

**चेटी**— एदु एदु भट्टिणी । (सर्वाः परिक्रामन्ति ।)

एतु एतु भट्टिनी ।

**साङ्कृत्यायनी**— (विलोक्य ।) अहो प्रेक्षणीयता प्रेक्षागृहस्य ।

**आभाति रत्नशतशोभितशातकुम्भ-**
**स्तम्भावसक्तपृथुमौक्तिकदामरम्यम् ।**
**अध्यासितं युवतिभिर्विजिताप्सरोभिः**
**प्रेक्षागृहं सुरविमानसमानमेतत् ॥ २ ॥**

स्वल्पोऽपि गौरवम् । पुष्पमालानुषङ्गेण तृणं शिरसि धार्यते ।" इति क्षेमेन्द्रः । **दृष्टान्तः** ॥ १ ॥

भट्टिनी— "भट्टिनी द्विजभार्यायां नाट्योक्त्या नृपयोषिति ।" इति विश्वः । प्रेक्षणीयता दर्शनीयता रम्यतेत्यर्थः ।

**आभातीति** । रत्नशतैः शोभितेषु शातकुम्भस्तम्भेषु स्वर्णस्थूणासु अवसक्तैः लम्बितैः पृथुभिः महद्भिः मौक्तिकदामभिः मुक्तामालाभिः रम्यं रमणीयम् । विजिताः अप्सरसः याभिस्ताभिः तथोक्ताभिः । युवतिभिः तरुणीभिः । अध्यासितं अधिष्ठितम् । एतत्, प्रेक्षागृहं नर्तनगृहम् । सुरविमानेन देवविमानेन समानं सदृशम् । आभाति शोभते ॥ २ ॥

**मनोरमारण्यके**— (उपसृत्य।) जेदु जेदु भट्टिणी।

जयतु जयतु भट्टिनी।

**वासवदत्ता**— मणोरमे, अदिक्कन्दा क्खु संज्झा। ता गच्छह। लहु गण्हह णेवच्छं।

मनोरमे, अतिक्रान्ता खलु सन्ध्या। तद्गच्छतम्। लघु गृह्णीतं नेपथ्यम्।

**उभे**— जं देवी आणवेदि। (इति प्रस्थिते।)

यद्देव्याज्ञापयति।

**वासवदत्ता**— आरण्णिए, एदेहिं एव्व मदङ्गपिणद्धेहिं आभरणहिं णेवच्छभूमिं गदुअ अप्पाणं पसाहेहि। (आभरणान्यङ्गादवतार्यारण्यकायाः समर्पयति।) मणोरमे, तुमं वि णलगिरिग्गहणपरितुट्ठेण तादेण अज्जउत्तस्स दिण्णाइ आभरणाइ इन्दीवरिआसआसादो गेण्हिअ णेवच्छभूमिअं गदुअ अप्पाणं मण्डेहि, जेण सुसदिसी दीससि महाराअस्स।

आरण्यके, एतैरेव मदङ्गपिनद्धैराभरणैर्नेपथ्यभूमिं गत्वात्मानं प्रसाधय। मनोरमे, त्वमपि नलगिरिग्रहणपरितुष्टेन तातेनार्यपुत्रस्य दत्तान्याभरणानीन्दीवरिकासकाशाद्गृहीत्वा नेपथ्यभूमिं गत्वात्मानं मण्डय, येन सुसदृशी दृश्यसे महाराजस्य।

(मनोरमा इन्दीवरिकासकाशादाभरणानि गृहीत्वा सहारण्यकया निष्क्रान्ता।)

**इन्दीवरिका**— एदं आसणं। उवविसदु भट्टिणी।

इदमासनम्। उपविशतु भट्टिनी।

---

पिनद्धानि बद्धानि धारितानीत्यर्थः। प्रसाधय अलंकुरु।

**वासवदत्ता**— (आसनं निर्दिश्य ।) उववसिदु भअवदी ।
उपविशतु भगवती ।

(उभे उपविशतः । ततः प्रविशति गृहीतनेपथ्यः कञ्चुकी ।)

**कञ्चुकी**—

**अन्तःपुराणां विहितव्यवस्थः**
**पदे पदेऽहं स्खलितानि रक्षन् ।**
**जरातुरः संप्रति दण्डनीत्या**
**सर्वं नृपस्यानुकरोमि वृत्तम् ॥ ३ ॥**

भोः आज्ञापितोऽस्मि विमानिताशेषशत्रुसैन्येन यथार्थनाम्ना महासेनेन—"समादिश्यतामन्तःपुरेषु । यथा श्वो वयमुदयनोत्सवमनुभवामः । अतो युष्माभिरुत्सवानुरूपवेषोज्ज्वलेन परिजनेन सह मन्मथोद्यानं गन्तव्यम् ।" इति ।

**अन्तःपुराणामिति** । अन्तः पुराणां अवरोधवधूजनानाम् । विहिता कृता व्यवस्था व्यवस्थितिः येन तथोक्तः । पदे पदे प्रतिपदं एकैकस्मिन्नपि विषय इत्यर्थः । स्खलितानि प्रमादान् । रक्षन् गोपायन्, तान्प्रमादेभ्यो निवारयन्नित्यर्थः । सत्यपि प्रमादे बहिरप्रकटयन्नित्यर्थो वा । अहम् । जरातुरः जरसा विक्लबः सन् । संप्रति । दण्डस्य आलम्बनयष्टेः नीत्या नयेन प्रापणेन वा तद्धारणेनेत्यर्थः । नृपस्य । सर्वं वृत्तं चरितम् । अनुकरोमि । राजापि हि अन्तः स्वमण्डले पुराणां पुरवासिजनानां विहितव्यवस्थः, प्रतिपदं स्खलितेभ्यस्तान्निवारयति । दण्डनीत्या अर्थशास्त्रेण चाणक्यादिप्रणीतेन नीतिशास्त्रेण व्यवहरतीति भावः । "दण्डेन नीयते चेदं दण्डं नयति वा पुनः । दण्डनीतिरिति ख्याता त्रीन् लोकानतिवर्तते ।" इति तन्निरुक्तिः ।

"आचार इत्यवहितेन मया गृहीता या वेत्रयष्टिरवरोधगृहेषु राज्ञः ।
काले गते बहुतिथे मम सैव जाता प्रस्थानविक्लबगतेरवलम्बनार्था ॥"

इति शाकुन्तलम् ।

**साङ्कृत्यायनी**— (कञ्चुकिनं निर्दिश्य ।) राजपुत्रि, प्रवृत्ता प्रेक्षा। दृश्यताम् ।

**कञ्चुकी**— तदेतदादेष्टव्यं परिजनेन सह गन्तव्यमिति । गृहीतनेपथ्येनेति नादेष्टव्यम् । कुतः ।

**पादैर्नूपुरिभिर्नितम्बफलकैः शिञ्जानकाञ्चीगुणै-**
**र्हारापादितकान्तिभिः स्तनतटैः केयूरिभिर्बाहुभिः ।**
**कर्णैः कुण्डलिभिः करैः सवलयैः सस्वस्तिकैर्मूर्धजै-**
**र्देवीनां परिचारिकापरिजनोऽप्येतेषु संदृश्यते ॥ ४ ॥**

न खलु किंचिदत्रापूर्वमनुष्ठेयम् । केवलं स्वाम्यादेश इति मत्वाहं समादिष्टः । तदाज्ञाशेषं राजपुत्र्यै निवेदयामि । (परिक्रम्यावलोक्य च ।) इयं सा वासवदत्ता वीणाहस्तया काञ्चनमालयानुगम्यमाना गन्धर्वशालां प्रविष्टा । यावदस्याः कथयामि ।

(परिक्रामति ।)

---

प्रेक्षा नृत्तम् । "प्रेक्षा धीरीक्षणं नृत्तम्" हैमः ।

**पादैरिति** । नूपुरिभिः तुलाकोटिविशिष्टैः । पादैः । शिञ्जानः शब्दायमानः काञ्चीगुणः मेखलादाम येषु तैः तथोक्तैः । नितम्बफलकैः फलकतुल्यैर्नितम्बैः । हारैः मौक्तिकमालाभिः आपादिता उत्पादिता कान्तिः येषां तैः तादृशैः । स्तनतटैः । केयूरिभिः अङ्गदसहितैः । बाहुभिः । कुण्डलिभिः । कर्णैः । सवलयैः सकङ्कणैः । करैः । सस्वस्तिकैः मङ्गलद्रव्यसहितैः । मूर्धजैः केशैः । (उपलक्षितः) एतेषु अन्तःपुरेषु । देवीनाम् । परिचारिकाणां परिजनः भृत्यजनोऽपि । संलक्ष्यते । परिचारिका परिजनस्याप्येवं स्थितिरिति किं पुनर्वक्तव्यं देवीनां तत्परिजनानां चालंकारवैयग्र्यमिति भावः । " स्वस्तिकः मङ्गलद्रव्यम् । तत्तु तण्डुलचूर्णनिर्मितत्रिकोणाकाराधिवासद्रव्यम् । " इति कल्पद्रुमः । स्वस्तिकः शिरसा धार्यमाणो भूषणविशेषः ।" इति केचित् ॥ ४ ॥

(ततः प्रविशति गृहीतवासवदत्तानेपथ्यासनस्थारण्यका वीणाहस्ता काञ्चन-
माला च ।)

**आरण्यका**— हला कञ्चणमाले, कीस उण चिरअदि अज्ज वि
वीणाआरिओ ।

हला काञ्चनमाले, कस्मात्पुनश्चिरयत्यद्यापि वीणाचार्यः ।

**काञ्चनमाला**— भट्टिदारिए, दिट्ठो देण एक्को उम्मत्तो । तस्स
वअणं सुणिअ चित्तेण भाविदो ओहसन्तो चिट्ठइ ।

भर्तृदारिके, दृष्टस्तेनैक उन्मत्तः । तस्य वचनं श्रुत्वा
चित्रेण भावितोऽपहसंस्तिष्ठति ।

**आरण्यका**— (सहस्ततालं विहस्य ।) हञ्जे, सुट्ठु एदं पुच्छदि ।
सरिसा सरिसे रज्जन्तित्ति दुवे एत्थ उम्मत्ता ।

हञ्जे, सुष्ठ्वेतं पृच्छति । सदृशाः सदृशे रज्यन्त इति द्वा-
वत्रोन्मत्तौ ।

**साङ्कृत्यायनी**— राजपुत्र्याः सदृशमाकारं पश्याम्यस्याः । तादृशे-
नाकारेणावश्यं त्वदीयां भूमिकां संभावयिष्यति ।

**कञ्चुकी**— (उपसृत्य) राजपुत्रि, देवस्त्वामाज्ञापयति—"श्वोऽ-
वश्यमस्माभिर्वीणां वादयन्ती श्रोतव्या । तत्त्वया नवतन्त्री-
सज्जया घोषवत्या स्थेयम् ।" इति ।

---

चित्रं विस्मयः ।

सदृशाः— "सर्वः सगन्धेषु विश्वसिति । द्वावप्यत्रारण्यकौ ।" इति
शाकुन्तलम् ।

घोषवती वीणा ।

**आरण्यका**— जइ एव्वं लहु वीणाआरिअं विसज्जेहि ।
यद्येवं लघु वीणाचार्यं विसर्जय ।

**कञ्चुकी**— एष वत्सराजं प्रेषयामि । ( इति निष्क्रान्तः । )

**आरण्यका**— कञ्चणमाले, उवणेहि मे घोसवदीं; जाव तन्तीओ परिक्खेमि ।

काञ्चनमाले, उपनय मे घोषवतीम् ; यावदस्यास्तन्त्रीः परीक्षे ।

( काञ्चनमाला वीणामर्पयति । आरण्यकोत्सङ्गे वीणां कृत्वा सारयति । ततः प्रविशति गृहीतवत्सराजनेपथ्या मनोरमा । )

**मनोरमा**— ( स्वगतम् । ) चिरअदि क्खु महाराओ । किं ण कहिदं वसन्तएण । अहवा देवीए भाअदि । जइ दाणिं आअच्चे तदो रमणिज्जं हवे ।

चिरयति खलु महाराजः । किं न कथितं वसन्तकेन । अथवा देव्या बिभेति । यदीदानीमागच्छेत्ततो रमणीयं भवेत् ।

( ततः प्रविशति राजावगुण्ठितशरीरो विदूषकश्च । )

**राजा**—

**संतापं प्रथमं तथा न कुरुते शीतांशुरद्यैव मे**
**निश्वासा ग्लपयन्त्यजस्रमधुनैवोष्णास्तथा नाधरम् ।**

विसर्जय प्रेषय ।

सारयति तन्त्रीर्वादयति, संस्करोति वा ।

**संतापमिति ।** शीतांशुः चन्द्रः । मे । प्रथमं पूर्वम् । संतापम् । (यथा अकरोत्) तथा । अद्य इदानीमेव । न कुरुते । तथा । उष्णाः ।

**संप्रत्येव मनो न शून्यमलसान्यङ्गानि नो पूर्वव-**
**द्दुःखं याति मनोरथेषु तनुतां संचिन्त्यमानेष्वपि ॥ ५ ॥**

वयस्य, सत्यमेवोक्तं मनोरमया? यथा—"एषा मम प्रियसखी देव्या महाराजस्य दर्शनपथादपि रक्ष्यते। तदयं समागमोपायः। अद्य रात्रावस्माभिरुदयनचरितं नाम नाटकं देव्याः पुरतो नर्तितव्यम्। तत्रारण्यका वासवदत्ता भविष्यति। अहमपि वत्सराजः। तच्चरितेनैव सर्वं शिक्षितव्यम्। तदागत्य स्वयमेव स्वां भूमिकां कुर्वाणः समागमोत्सवमनुभवतु" इति।

**विदूषकः**— जइ मं ण पत्तिएसि, एसा मणोरमा तुह वेसं धारअन्ती चिट्ठइ। ता उवसप्पिअ सअं एव्व पुच्छ।

यदि मां न प्रत्येषि, एषा मनोरमा तव वेषं धारयन्ती तिष्ठति। तदुपसृप्य स्वयमेव पृच्छ।

**राजा**— (मनोरमामुपसृत्य) मनोरमे, सत्यमिदम्? यद्वसन्तकोऽभिधत्ते।

**मनोरमा**— भट्टा, सच्चं एव्व। मण्डअ एदेहिं आभरणेहिं अप्पाणं (इत्याभरणान्यङ्गादवतार्य राज्ञे समर्पयति।)

निश्वासाः। अधुनैव। अधरम्। अजस्रं अनवरतम्। न ग्लपयन्ति न म्लानं कुर्वन्ति। संप्रत्येव। मनः। न शून्यम्। अङ्गानि। पूर्ववत्। नो अलसानि न तत्तत्कार्यविमुखानि। "आलस्यं श्रमगर्भाद्यैर्जाड्यं जृम्भासितादिकृत्।" इति दर्पणे। मनोरथेषु अभिलाषेषु। संचिन्त्यमानेषु आशास्यमानेष्वपि। दुःखम्। तनुताम्। याति। "आशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः।" इति मालतीमाधवम् ॥ ५ ॥

भर्तः, सत्यमेव। मण्डयैतैराभरणैरात्मानम्।

( राजा परिदधाति। )

**विदूषकः**— एदे क्खु राआणो दासीए वि एव्वं णच्चाविअन्ति। अहो कज्जस्स गुरुअदा।

एते खलु राजानो दास्याप्येवं नर्त्यन्ते। अहो कार्यस्य गुरुता।

**राजा**— ( विहस्य। ) मूर्ख, नैष कालः परिहासस्य। निभृतेन चित्रशालां प्रविश्य मनोरमया सहास्मन्नृत्तं पश्यता स्थीयताम्।

( उभौ तथा कुरुतः। )

**आरण्यका**— कञ्चणमाले, चिट्ठदु वीणा। पुच्छिस्सं दाव किं वि।

काञ्चनमाले, तिष्ठतु वीणा। प्रक्ष्यामि तावत्किमपि।

**राजा**— शृणोमि तावत्कतमोऽयमुद्देशो वर्तते। (इत्यवहितः शृणोति।)

**काञ्चनमाला**— पुच्छदु भट्टिदारिआ।

पृच्छतु भर्तृदारिका।

**आरण्यका**— सच्चं एव्व तादो मन्तेदि एव्वं? जह—"जइ वीणं वादअन्तो अवहरेदि मं वच्छराओ, अवस्सं बन्धणादो मुञ्चेमि" त्ति।

उद्देशः कथाभागः।

सत्यमेव तातो मन्त्रयते एवम्? यथा—"यदि वीणां वादयन्नपहरति मां वत्सराजः, अवश्यं बन्धनान्मुञ्चामि" इति ।

**राजा**— (प्रविश्य पटाक्षेपेण सहर्षं वस्त्रान्ते ग्रथितं बध्नाति ।) एवमेतत्। कः संदेहः ।

**सपरिजनं प्रद्योतं विस्मयमुपनीय वादयन्वीणाम् ।**
**वासवदत्तामपहरामि नचिरादेव पश्याम्यहम् ॥ ६ ॥**

यतः सुसंविहितं सर्वं यौगन्धरायणेन ।

---

सत्यमेवेत्यादि— अपहरति वशीकरोति, वशीकृत्यापहृत्य च गच्छति वा । द्वितीयस्मिन्नर्थे मुञ्चामीत्यस्य स्वयमपहृत्य गमनेऽपि नाहं तन्निरोधाय बलवदुत्सहिष्ये इत्यर्थः । अयमत्र वाक्याभिप्रायः । "स्वकन्यायां वत्सराजस्यानुरागोत्पत्तिरेव हि वासवदत्तापितुरभिलषिता । अतो यदि स्वयमेव वीणावादनादिप्रसङ्गेन तां वशीकरिष्यति वत्सराजः, प्रियं नस्तदिति प्रमोदस्थानमिदम् ।" इति । विस्तरस्तु कथासरित्सागरे द्रष्टव्यः ।

पटाक्षेपेण—पटस्य तिरस्करिण्याः आक्षेपेण अपसारणेन । हर्षसंभ्रमादिसमये पात्राणां पटाक्षेपेण प्रवेशः सांप्रदायिकः । वस्त्रान्ते ग्रथितं बध्नाति—वस्त्रान्ते ग्रन्थिबन्धनं चिकीर्षितस्यावश्यकर्तव्यत्वसंस्मरणादिनिमित्तं क्रियते इति लौकिकी रीतिः ।

**सपरिजनमिति** । अहम् । वीणाम् । वादयन् । सपरिजनम् । प्रद्योतम् । विस्मयम् । उपनीय प्रापय्य । वासवदत्ताम् । नचिरादेव । अपहरामि वशीकरोमि, वशीकृत्य गच्छामि वा । पश्यामि तथा सर्वं संपद्येतेति समालोचयामि । अयं पाठो नातीवहृदयंगमः । उत्तरार्द्धमपि न वृत्तलक्षणानुसारि । तथापि बहुषु पुस्तकेष्वेवं पाठदर्शनात्स्थितमनुसृत्यास्माभिरेवं व्याख्यातम् ।

सुसंविहितं सम्यगनुष्ठेयमनुष्ठितम् । यौगन्धरायणेन तन्नाम्ना मन्त्रिणा । इतो निष्क्रमणेऽपि यथा मध्येपथं सौकर्यं संभविष्यति, तथा सुष्ठु सर्वमाचरितं यौगन्धरायणेनेति भावः । संविधानक्रमश्च कथासरित्सागरे द्रष्टव्यः ।

**वासवदत्ता**— ( सहसोत्थाय । ) जेदु जेदु अज्जउत्तो ।

जयतु जयत्वार्यपुत्रः ।

**राजा**— ( स्वगतम् । ) कथं प्रत्यभिज्ञातोऽस्मि देव्या ।

**साङ्कृत्यायनी**— (सस्मितम् । ) राजपुत्रि, अलमलं संभ्रमेण । प्रेक्षणीयकमेतत् ।

**राजा**— ( आत्मगतं सहर्षम् । ) इदानीमुच्छ्वासितोऽस्मि ।

**वासवदत्ता**— ( सविलक्षस्मितमुपविश्य । ) कहं मणोरमा एसा । मए उण जाणिदं अज्जउत्तो एसोत्ति । साहु मणोरमे साहु । सोहणं णच्चिदं ।

कथं मनोरमैषा । मया पुनर्ज्ञातमार्यपुत्र एष इति । साधु मनोरमे साधु । शोभनं नर्तितम् ।

**साङ्कृत्यायनी**— राजपुत्रि, स्थान एव कृता भ्रान्तिस्ते मनोरमया । पश्य ।

**रूपं तन्नयनोत्सवास्पदमिदं वेषः स एवोज्ज्वलः**
**सा मत्तद्विरदोचिता गतिरियं तत्सत्त्वमत्यूर्जितम् ।**
**लीला सैव स एव सान्द्रजलदह्लादानुकारी स्वरः**
**साक्षादर्शित एष नः कुशलया वत्सेश एवानया ॥ ७ ॥**

---

उच्छ्वासितः प्रत्युज्जीवितः ।

**रूपमिति** । इदं पुरो दृश्यमानम् । रूपम् । नयनोत्सवस्य आस्पदं हेतुः । तत् तद्रूपमेव । नयनोत्सवास्पदमिदं रूपमिति वा । वेषः । उज्ज्वलः । स एव । उज्ज्वलः वेष इति वा । मत्तद्विरदेन मत्तगजेन उचिता अभ्यस्ता मत्तगजसंबन्धिनीत्यर्थः । “ अभ्यस्तेऽप्युचितं त्रिषु । ” इति यादवः । इयं गतिः । सा

**वासवदत्ता**— हञ्जे इन्दीवरिए, बद्धेण अज्जउत्तेण अहं वीणं सिक्खाविदा । ता से करेहि णीलुप्पलदामएण णिअळणम् ।
(शिरसोऽपनीय नीलोत्पलदामार्पयति ।)

हञ्जे इन्दीवरिके, बद्धेनार्यपुत्रेणाहं वीणां शिक्षिता । तदस्य कुरु नीलोत्पलदामकेन निगलनम् ।

(इन्दीवरिका तथा कृत्वा पुनस्तत्रैवोपविशति ।)

**आरण्यका**— कञ्चणमाले, कहेहि कहेहि । णं सच्चं एव्व मन्तेदि तादो ? "जइ वीणं वादअन्तो अवहरेदि मं वच्छराओ तदो अवस्सं बन्धणादो मुञ्चेमि" त्ति ।

काञ्चनमाले, कथय कथय । ननु सत्यमेव मन्त्रयते तातः ? "यदि वीणां वादयन्नपहरति मां वत्सराजस्ततोऽवश्यं बन्धनान्मुञ्चामि" इति ।

**काञ्चनमाला**— भट्टिदारिए सच्चं । तह करेहि, जह वच्छराअस्स अवस्सं बहुमदा होसि ।

भर्तृदारिके, सत्यम् । तथा कुरु, यथा वत्सराजस्यावश्यं बहुमता भवसि ।

**राजा**— निष्पादितमेव काञ्चनमालया यत्तदास्माभिरभिलषितम् ।

पूर्वानुभूता तत्संबन्धिनी गतिरेव । अत्यूर्जितं अतिबलवत् । सत्त्वं अवष्टम्भः, गुणो वा । तत् तदेव । लीला विलासः । सैव । सान्द्रः जलपूर्णः यः जलदः मेघः तस्य ह्रादं स्तनितं अनुकरोतीति तादृशः नवनीरदस्तानितसदृश इत्यर्थः । स्वरः कण्ठध्वनिरपि । स एव । कुशलया समर्थया । अनया मनोरमया । एषः । वत्सेश एव । नः अस्माकं अस्मभ्यं वा । साक्षात् दर्शितः ।

निगलनं बन्धनम् ।

**आरण्यका**— जइ एव्वं ता आदरेण वादइस्सं। (गायन्ती वादयति।)

यद्येवं तदादरेण वादयिष्यामि।

घणबन्धणसंरुद्धं गअणं दट्ठूण माणसं एदुं।
अहिलसइ राअहंसो दइअं घेऊण अप्पणो वसइं॥ ८॥

घनबन्धनसंरुद्धं गगनं दृष्ट्वा मानसमेतुम्।
अभिलषति राजहंसो दयितां गृहीत्वात्मनो वसतिम्॥

(विदूषको निद्रां नाटयति।)

**मनोरमा**— (हस्तेन चालयन्ती।) वसन्तअ, पेक्ख पेक्ख पिअसही मे णच्चइ।

वसन्तक, पश्य पश्य। प्रियसखी मे नृत्यति।

**विदूषकः**— (सरोषम।) दासीए सुदे, तुमं वि ण देसि सुविदुं। जदप्पहुदि पिअवअस्सेण आरण्णिआ दिट्ठा तदप्पहुदि तेण सह मए रत्तिंदिवं णिद्दा ण दिट्ठा। ता अण्णदो णिक्कमिअ सुविस्सं। (निष्क्रम्य शेते।)

**घनेति**। घनानां मेघानां घनैः मेघैर्वा बन्धनेन शृङ्खलावदविच्छेदेन स्थित्या संरुद्धम्। गगनं आकाशम्। दृष्ट्वा। राजहंसः हंसश्रेष्ठः। दयितां प्रियाम्। गृहीत्वा। आत्मनः। वसतिं वासस्थानम्। मानसं मानससरः। एतुं गन्तुम्। अभिलषति इच्छति। अथ च, राजहंसः राजश्रेष्ठः वत्सराजः। घनबन्धनेन निबिडशृङ्खलाबन्धेन संरुद्धम्। गगनं गगनसदृशं तमसा नीलं चारकम्। दृष्ट्वा। दयितां प्रियां वासवदत्ताम्। गृहीत्वा। मानसं मनः। एतुं प्राप्तुं सरसकेलीविलासैस्तन्मनो विनोदयितुमित्यर्थः। आत्मनः। वसतिम्। अभिलषति गन्तुमिच्छति। **अप्रस्तुतप्रशंसा**॥ ८॥

दास्याः सुते, त्वमपि न ददासि स्वप्तुम् । यदाप्रभृति प्रियवयस्येनारण्यका दृष्टा तदाप्रभृति तेन सह मया रात्रिंदिवं निद्रा न दृष्टा । तदन्यतो निष्क्रम्य स्वप्स्यामि ।

(आरण्यका पुनर्गायति ।)

अहिणवराअक्खित्ता महुअरिआ वामएण कामेण ।
उत्तम्मइ पत्थन्ती दट्ठुं पिअदंसणं दइअं ॥ ९ ॥

अभिनवरागक्षिप्ता मधुकरिका वामकेन कामेन ।
उत्ताम्यति प्रार्थयमाना द्रष्टुं प्रियदर्शनं दयितम् ।॥

**राजा**— (तत्क्षणं श्रुत्वा सहसोपसृत्य ।) साधु राजपुत्रि साधु । अहो गीतमहो वादित्रम् । तथा हि ।

व्यक्तिर्व्यञ्जनधातुना दशविधेनाप्यत्र लब्धाधुना
विस्पष्टो द्रुतमध्यलम्बितपरिच्छिन्नस्त्रिधायं लयः ।

---

रात्रिंदिवं रात्रौ च दिवा च । "अचतुर" इत्यादिना निपातनात्साधुः ।

**अभिनवेति** । वामकेन प्रतीपेन दुर्लभवस्तुनि प्रवर्तयित्रेत्यर्थः । "सखि वामः किल कामः" इति दशकुमारचरितम् । कामेन मन्मथेन । अभिनवे नूतने रागे अनुरागे क्षिप्ता पातिता । मधुकरिका भृङ्गी । प्रियदर्शनं सुन्दरम् । दयितं प्रियम् । द्रष्टुम् । प्रार्थयमाना अभिलषन्ती । उत्ताम्यति क्लाम्यति तमधिगन्तुमुत्कण्ठत इत्यर्थः । अत्राप्रस्तुतभृङ्गीवृत्तान्तेन प्रस्तुतनायिकावृत्तान्तप्रतीतेः **अप्रस्तुतप्रशंसा** ॥ ९ ॥

वादित्रं वाद्यम् ।

**व्यक्तिरिति** । अत्र अस्मिन् गीते । अधुना । अमुनेति पाठान्तरम् । दशविधेन "दश तु व्यञ्जने मताः । पुष्पं कलं तलं बिन्दू रेफो निःस्वनितं ततः । निष्कोटितमथोन्मृष्टमवमृष्टनिबन्धने ।" इत्युक्तरीत्या दशप्रकारेणापि । व्यञ्जनधातुना "ये प्रहारविशेषोत्थाः स्वरास्ते धातवो मताः । विस्तारकरणाविद्धव्यञ्ज-

**गोपुच्छप्रमुखाः क्रमेण यतयस्तिस्रोऽपि संपादिता-**
**स्तत्त्वौघानुगताश्च वाद्यविधयः सम्यक्त्रयो दर्शिताः ॥१०॥**

---

नाश्चेति धातवः ।" इत्युक्तप्रकारेण व्यञ्जनाख्यस्वरविशेषेण । "धातुशब्दो रागपरः" इति कश्चित् । व्यक्तिः स्फुटता । लब्धा । वृत्तिरिति पाठे तु, वृत्तिः "वृत्तिर्गुणप्रधानत्वरूपा व्यवहृतिर्मता । चित्रा वृत्तिर्दक्षिणा च तिस्रः स्युरिति वृत्तयः ।" इत्युक्तलक्षणो गीतवाद्ययोर्गुणप्रधानत्वरूपो व्यवहार इति व्याख्येयम् । त्रिधा । द्रुतः, मध्यः, लम्बित इत्येवं परिच्छिन्नः विभक्तः निर्णीतो वा । अयं लयः "क्रियानन्तरविश्रान्तिर्लयः स त्रिविधो मतः । द्रुतो मध्यो विलम्बश्च द्रुतः शीघ्रतमो मतः । द्विगुणद्विगुणौ ज्ञेयौ तस्मान्मध्यविलम्बितौ ।" इति प्रतिपादितो लयः । "लयो दशतालप्राणान्यतमस्तालान्तरालवर्ती लयनात्मकः कालविशेषः । उक्तं च प्रस्तारे— कालो जातिः क्रियाङ्गानि मार्गग्रहकला लयः । यतिः प्रसारकश्चेति तालप्राणा दश स्मृताः ।" इति रङ्गनाथः । "तालः कालक्रियामानं लयः साम्यमथास्त्रियाम्" इत्यमरव्याख्यानावसरे "गीतवाद्यपादन्यासानां क्रियाकालयोः परस्परं समता लयः" इति भरतः । लयश्च हृदिस्थितिः, कण्ठस्थितिः, कपालस्थितिरिति त्रिधा" इति केचित् । संगीतदामोदरे तु, "द्विपदीस्याद्दुलतिका" इत्यारभ्य "रमणीयस्ततश्चैव करकण्टकसंज्ञकः । चत्वारिंशदिमे प्रोक्ता लया लयविशारदैः ।" इत्युक्तम् । विस्पष्टः । गोपुच्छप्रमुखाः गोपुच्छाद्याः । तिस्रोऽपि यतयः "लयप्रवृत्तिनियमो यतिरित्यभिधीयते । समा स्रोतोगता चान्या गोपुच्छा त्रिविधेति सा ।" इत्युक्ताः समास्रोतोगतागोपुच्छाख्याः यतयः । क्रमेण "द्रुतादिकान् लयानासां नियच्छन्ति क्रमात्परे । समां स्रोतोगतां तद्वद्गोपुच्छां च यतिं क्रमात् । ओघं चानुगतं तत्त्वं वाद्यान्येतान्यनुक्रमात् ।" इति संगीतशास्त्रोक्तेन प्रकारेण । संपादिताः । तत्त्वौघानुगताः तत्त्वम्, ओघः, अनुगतमित्येवं संगीतशास्त्रोक्ताः । लयः । वाद्यविधयः वाद्यध्वनिविशेषरीतयश्च । सम्यक् सुष्ठु । दर्शिताः प्रकाशिताः । "तत्त्वं भवेदनुगतमोघश्चेति निरूपितम् । गीतानुगं त्रिप्रकारं वाद्यं तल्लक्ष्म कथ्यते ।" इति कल्पलता । तत्त्वादिलक्षणं तु रत्नाकरे द्रष्टव्यमिति विस्तरभिया विरम्यते । अमरस्तु "विलम्बितं द्रुतं मध्यं तत्त्वमोघो घनं क्रमात् ।" इत्याह ।

**आरण्यका**— (वीणां परिष्वज्यासनादुत्थाय राजानं साभिलाषं पश्यन्ती ।) उवज्झाअ, पणमामि ।

उपाध्याय, प्रणमामि ।

**राजा**— (सस्मितम् ।) यदहमिच्छामि तत्ते भूयात् ।

**काञ्चनमाला**— (आरण्यकाया आसनं निर्दिश्य ।) इह एव्व उवविसदु उवज्झाओ ।

इहैवोपविशतु उपाध्यायः ।

**राजा**— (उपविश्य ।) राजपुत्री क्वेदानीमुपविशतु ।

**काञ्चनमाला**— (सस्मितम् ।) दाणिं एव्व भट्टिदारिआ विज्जामाणेण परितोसिदा तुह्मेहिं । ता अरुहदि एव्व एसा उवज्झाअपीठिआए ।

इदानीमेव भर्तृदारिका विद्यामानेन परितोषिता युष्माभिः । तदर्हत्येवैषोपाध्यायपीठिकायाः ।

**राजा**— उपविशत्वर्हेयमर्धासनस्य । राजपुत्रि, स्थीयताम् ।

(आरण्यका काञ्चनमालां पश्यति ।)

**काञ्चनमाला**— (सस्मितम् ।) भट्टिदारिए, उवविस । को एत्थ दोसो । सिस्सविसेसा क्खु तुमम् ।

---

संगीतशास्त्रसर्वस्वं कविनात्र निवेशितम् । किंचिद्विवृतमस्माभिर्विस्तरोऽन्यत्र दृश्यताम् ॥ १० ॥

विद्यामानेन विद्यागौरवेण ।

भर्तृदारिके, उपविश । कोऽत्र दोषः । शिष्याविशेषा खलु त्वम् ।

(आरण्यका सलज्जमुपविशति ।)

**वासवदत्ता**— (सलज्जम् ।) भअवदीए अहिअं कप्पिदं कव्वं । ण हु अहं तस्सिं काले एक्कासणे अज्जउत्तेण सह उवट्ठिदा ।

भगवत्याधिकं कल्पितं काव्यम । न खल्वहं तस्मिन्काले एकासने आर्यपुत्रेण सहोपस्थिता ।

**राजा**— राजपुत्रि, पुनः श्रोतुमिच्छामि । वादय वीणाम् ।

**आरण्यका**— (सस्मितम् ।) कञ्चणमाले, चिरं खु मम वादअन्तीए परिस्समो जादो । दाणिं णिस्सहाइ अङ्गाइ । ता ण सक्कुणोमि वादइदुं ।

काञ्चनमाले, चिरं खलु मम वादयन्त्याः परिश्रमो जातः । इदानीं निःसहान्यङ्गानि । तत् न शक्नोमि वादयितुम् ।

**काञ्चनमाला**— उवज्झाअ, सुट्ठु परिस्सन्ता भट्टिदारिआ । कवोलतलबद्धसेअलवाए पेक्ख से वेवन्ति अग्गहत्था । ता समस्सत्ता होदु मुहुत्तअं ।

---

शिष्याविशेषा शिष्येषु अतिशयिता, श्रेष्ठा शिष्येत्यर्थः । अतिशयितार्थको विशेषशब्दस्त्रिलिङ्गः । तथा च कालिदासः— "आसीद्विशेषा फलपुष्पवृद्धिः ।" इति ।

निःसहानि अशक्तानि क्लान्तानीत्यर्थः ।

अग्रौ च तौ हस्तौ च अग्रहस्तौ । "हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदात्" इति वामनः ।

उपाध्याय, सुष्ठु परिश्रान्ता भर्तृदारिका। कपोलतलबद्ध-स्वेदलवायाः पश्यास्या वेपेते अग्रहस्तौ । तत्समाश्वस्ता भवतु मुहूर्तम् ।

**राजा**— काञ्चनमाले, युक्तमभिहितम् । (हस्तेन ग्रहीतुमिच्छति । आरण्यका हस्तमपसारयति ।)

**वासवदत्ता**— (सासूयम् ।) भअवदि, अहिअं एदं वि तुए किदं । ण हु अहं कञ्चणमालाकव्वेण वञ्चइदव्वा ।

भगवति, अधिकमेतदपि त्वया कृतम् । न खल्वहं काञ्चनमालाकाव्येन वञ्चयितव्या ।

**साङ्कृत्यायनी**— (विहस्य ।) आयुष्मति, ईदृशमेव काव्यं भविष्यति ।

**आरण्यका**— (सरोषमिव ।) अवेहि कञ्चणमाले अवेहि । ण मे बहुमदासि ।

अपेहि काञ्चनमाले अपेहि । न मे बहुमतासि ।

**काञ्चनमाला**— (सस्मितम् ।) जइ अहं चिट्ठन्ती ण बहुमदा ता एसा गच्छम्मि । (इति निष्क्रान्ता ।)

यद्यहं तिष्ठन्ती न बहुमता तदेषा गच्छामि ।

**आरण्यका**— (ससंभ्रमम् ।) कञ्चणमाले, चिट्ठ चिट्ठ । अअं से अग्गहत्थो समप्पिदो ।

काञ्चनमाले, तिष्ठ तिष्ठ । अयमस्याग्रहस्तः समर्पितः ।

**राजा**— (आरण्यकाया हस्तं गृहीत्वा ।)

सद्योऽवश्यायबिन्दुव्यतिकरशिशिरः किं भवेत्पद्मकोशो
ह्लादित्वं नास्य मन्ये सदृशमिदमुषस्येव वीतातपस्य ।
मुञ्चन्त्येते हिमौघं नखरजनिकराः पञ्च किं सोऽपि दाही
ज्ञातं स्वेदापदेशादविरतममृतं स्यन्दते व्यक्तमेतत् ॥ ११ ॥

अपि च ।

एतेन बालविद्रुमपल्लवशोभापहारदक्षेण ।
हृदये मम त्वयायं न्यस्तो रागः स्वहस्तेन ॥ १२ ॥

**आरण्यका**— (स्पर्शविशेषं नाटयन्ती । आत्मगतम् ।) हद्धि हद्धि ।
एदं मणोरमं परिसन्तीए अणत्थं एव्व मे अङ्गाइ करेन्ति ।

---

**सद्य इति** । सद्यः तत्क्षणम् । अवश्यायबिन्दूनां हिमकणानां व्यतिकरेण संपर्केण शिशिरः शीतः । पद्मकोशः पद्ममुकुलः । भवेत् किम् । वीतः गतः आतपः यस्य तस्य तादृशस्य आतपशून्यस्येत्यर्थः । सत्यातपे हिमकणानां शोषणं स्यादिति भावः । अस्य पद्मकोशस्य । उषसि प्रभात एव । इदं अनुभूयमानम् । ह्लादित्वं आह्लादकत्वम् । न सदृशं नानुगुणम् । मन्ये अहं जानामि । ह्लादित्वं सदृशं न मन्ये इति वा । पञ्च । एते नखा एव रजनिकराः इन्दवः । हिमौघं हिमसन्ततिम् । मुञ्चन्ति किम् । सः हिमौघोऽपि । दाही पद्मकोशविषये दहनशीलः । अतस्तथा भवितुं नार्हतीति भावः । तत्त्वमिदानीं निर्णीतमित्याह— **ज्ञातमिति** । ज्ञातं निर्णीतम् । स्वेदापदेशात् स्वेदव्याजात् । अविरतं अविच्छिन्नं यथा तथा । अमृतविशेषणं वा । अमृतम् । स्यन्दते प्रस्रवति । एतत् । व्यक्तं स्फुटम् । **संदेहापह्नवसंकीर्णोत्प्रेक्षा** ॥ ११ ॥

**एतेनेति** । बालः यः विद्रुमपल्लवः प्रवालकिसलयं तस्य शोभायाः कान्तेः अपहारे हरणे दक्षेण कुशलेन, तत्सदृशेनेत्यर्थः । एतेन । स्वहस्तेन । त्वया । मम । हृदये । अयम् । रागः अनुरागः, रक्तिमा च । न्यस्तः समर्पितः । **उपमा परिकरश्चालङ्कारः** ॥ १२ ॥

हा धिक् हा धिक्। एतां मनोरमां स्पृशन्त्या अनर्थमेव मेऽङ्गानि कुर्वन्ति ।

**वासवदत्ता**— (सहसोत्थाय ।) भअवदि, पेक्ख तुमं । अहं उण अलिअं ण पारेमि पेक्खिदुं ।

भगवति, पश्य त्वम्। अहं पुनरलीकं न पारयामि प्रेक्षितुम् ।

**साङ्कृत्यायनी**— राजपुत्रि, धर्मशास्त्रविहित एष गान्धर्वो विवाहः । किमत्र लज्जास्थानम् । प्रेक्षणीयकमिदम् । तन्न युक्तमस्थाने रसभङ्गं कृत्वा गन्तुम् ।

(वासवदत्ता परिक्रामति ।)

**इन्दीवरिका**— (विलोक्य ।) भट्टिणि, वसन्तओ चित्तसालादुवारे पसुत्तो चिट्ठइ ।

भट्टिनि, वसन्तकश्चित्रशालाद्वारे प्रसुप्तस्तिष्ठति ।

**वासवदत्ता**— (निरूप्य ।) वसन्तओ एव्व एसो । (विचिन्त्य ।) रण्णा वि एत्थ होदव्वं । ता बोधाविअ पुछिस्सं दाव णं । (प्रबोधयति ।)

वसन्तक एवैषः । राज्ञाप्यत्र भवितव्यम्। तद्बोधयित्वा प्रक्ष्यामि तावदेनम् ।

---

गान्धर्वो विवाहः—

"इच्छयान्योन्यसंयोगः कन्यायाश्च वरस्य च ।
गान्धर्वस्स तु विज्ञेयो मैथुन्यः कामसंभवः ॥"

इति तल्लक्षणम् ।

प्रेक्षणीयकं दृश्यकाव्यम् ।

**विदूषकः**— (निद्राजडमुत्थाय सहसा विलोक्य।) मणोरमे, किं णच्चिअ आअदो पिअवअस्सो। अह वा णच्चदि एव्व।

मनोरमे, किं नर्तित्वागतः प्रियवयस्यः। अथवा नृत्यत्येव।

**वासवदत्ता**— (सविषादम्।) कहं अज्जउत्तो णच्चादि। मणोरमा दाणिं कहिं।

कथमार्यपुत्रो नृत्यति। मनोरमेदानीं कुत्र।

**विदूषकः**— एसा चित्तसालाए चिट्ठइ।

एषा चित्रशालायां तिष्ठति।

**मनोरमा**— (सभयमात्मगतम्।) कहं अण्णहा एव्व हिअए करिअ देवीए मन्तिदं। एदेण वि मुक्खवडुएण अण्णहा एव्व बुद्धिअ सव्वं आउलीकिदं।

कथमन्यथैव हृदये कृत्वा देव्या मन्त्रितम्। एतेनापि मूर्खबटुकेनान्यथैव बुद्ध्वा सर्वमाकुलीकृतम्।

**वासवदत्ता**— (सरोषं हसन्ती।) साहु मणोरमे साहु। सोहणं तुए णच्चिदं।

साधु मनोरमे साधु। शोभनं त्वया नर्तितम्।

**मनोरमा**— (सभयं कम्पमाना पादयोर्निपत्य।) भट्टिणि, ण हु अहं एत्थ अवरज्झामि। एदेण खु हदासेण बळादो अळंकरणाइ गेण्हिअ दुवारट्ठिदेण इह णिरुद्धा। ण उण मह अक्कन्दन्दीए सद्दो मुक्खणिग्घोसन्तरिदो केण वि सुदो।

---

वटुकः बालकः लोकतन्त्रानभिज्ञ इत्यर्थः। आकुलीकृतं यथार्थव्यक्तीकरणेन नाशितम्।

भर्त्रिनि, न खल्वहमत्रापराध्यामि । एतेन खलु हताशेन बलादलङ्करणानि गृहीत्वा द्वारस्थितेनेह निरुद्धा । न पुनर्ममाक्रन्दन्त्याः शब्दो मूर्खनिर्घोषान्तरितः केनापि श्रुतः ।

**वासवदत्ता**— हञ्जे उट्ठेहि । जाणिदं सव्वं । वसन्तओ क्खु आरण्णिआउत्तन्तणाडए सुत्तधारो ।

हञ्जे उत्तिष्ठ । ज्ञातं सर्वम् । वसन्तकः खल्वारण्यकावृत्तान्तनाटके सूत्रधारः ।

**विदूषकः**— सअं एव्व चिन्तेहि, कहिं आरण्णिआ कहिं वसन्तओत्ति ।

स्वयमेव चिन्तय, कुत्रारण्यका कुत्र वसन्तक इति ।

**वासवदत्ता**— मणोरमे, सुगहीदं करिअ णं आअच्छ । जाव पेक्खणीअं से पेक्खह्मि ।

मनोरमे, सुगृहीतं कृत्वैनमागच्छ । यावत्प्रेक्षणीयमस्य पश्यामि ।

**मनोरमा**— (स्वगतम् ।) दाणिं समस्सासिदह्मि । (विदूषकं करे बध्नाति । प्रकाशम् ।) हदास, दाणिं अणुभव अत्तणो दुण्णअस्स फलं ।

इदानीं समाश्वासितास्मि । हताश, इदानीमनुभवात्मनो दुर्नयस्य फलम् ।

**वासवदत्ता**— (ससंभ्रममुपसृत्य ।) अज्जउत्त, पडिहदं एदं अमङ्गळं । (इति पादयोर्नीलोत्पलदामापनयन्ती सोत्प्रासम् ।) मरि-

सोत्प्रासं सोपहासस्मितम् ।

सदु अज्जउत्तो जं मणोरमेत्ति करिअ णीलुप्पलदामएण बन्धाविदोसि ।

आर्यपुत्र, प्रतिहतमेतदमङ्गलम् । मर्षत्वार्यपुत्रो यन्मनोरमेति कृत्वा नीलोत्पलदामकेन बन्धितोऽसि ।

( आरण्यका सभयमपसृत्य तिष्ठति । )

**राजा**— ( सहसोत्थाय विदूषकं मनोरमां च दृष्ट्वात्मगतम् । ) कथं विज्ञातोऽस्मि देव्या । ( वैलक्ष्यं नाटयति । )

**साङ्कृत्यायनी**— ( सर्वानवलोक्य सस्मितम् । ) कथमन्यदेवेदं प्रेक्षणीयकं संवृत्तम् । अभूमिरियमस्मद्विधानाम् । ( इति निष्क्रान्ता । )

**राजा**— ( स्वगतम् । ) अपूर्वोऽयं कोपप्रकारः । दुर्लभमत्रानुनयं पश्यामि । ( विचिन्त्य । ) एवं तावत्करिष्ये । ( प्रकाशम् । ) देवि, त्यज्यतां कोपः ।

**वासवदत्ता**— अज्जउत्त, को एत्थ कुविदो ।

आर्यपुत्र, कोऽत्र कुपितः ।

**राजा**— कथं न कुपितासि ।

**स्निग्धं यद्यपि वीक्षितं नयनयोस्ताम्रा तथापि द्युति-**
**माधुर्येऽपि सति स्खलत्यनुपदं ते गद्गदा वागियम् ।**

---

वैलक्ष्यं लज्जा । "आत्मनः स्खलिते सम्यक् ज्ञातेऽन्यैर्यस्य जायते । अपत्रपातिमहती स विलक्ष इति स्मृतः ।" इति दीक्षितः ।

**स्निग्धमिति** । नयनयोः । वीक्षितं वीक्षणम् । यद्यपि स्निग्धं स्नेहयुक्तमेव । तथापि । द्युतिः ( तयोः ) कान्तिः । ताम्रा ( कोपेन ) अरुणा । माधुर्ये ।

**निश्वासा नियता अपि स्तनभरोत्कम्पेन संलक्षिताः**
**कोपस्ते प्रकटप्रयत्नविधृतोऽप्येष स्फुटं लक्ष्यते ॥ १३ ॥**

(पादयोर्निपत्य ।) प्रसीद प्रसीद ।

**वासवदत्ता**— आरण्णिए, तुमं कुविदत्ति संभावअन्तो अज्जउत्तो पिए पसीदत्ति पसादअदि । ता उवसप्प । (इति हस्तेनाकर्षति ।)

आरण्यके, त्वं कुपितेति संभावयन्नार्यपुत्रः प्रिये प्रसीदेति प्रसादयति । तदुपसर्प ।

**आरण्यका**— (सभयम् ।) भट्टिणि ण हु अहं किं वि जाणामि ।

भट्टिनि, न खल्वहं किमपि जानामि ।

**वासवदत्ता**— आरण्णिए, तुमं कहं जाणासि । दाणिं दे सिक्खावेमि । इन्दीवरिए, गेण्ह णं ।

सत्यपि । ते । इयं वाक् । गद्गदा अस्फुटध्वनियुक्ता सती । अनुपदं पदे पदे । स्खलति न सुष्ठु प्रवर्तते । निश्वासाः । नियताः नियमिताः गुप्ताः सन्तोऽपि । स्तनभरस्य उत्कम्पेन चलनेन । संलक्षिताः प्रकाशिताः । प्रकटेन प्रकाशेन उत्कटेन वा प्रयत्नेन उद्यमेन विधृतः नियमितः संवृतोऽपि । तव । एषः । कोपः । स्फुटं स्पष्टम् । लक्ष्यते ज्ञायते, पूर्वोक्तैर्हेतुभिः स्फुटमनुमीयत इत्यर्थः । **अनुमानालङ्कारः** ।

भ्रूभङ्गे सहसोद्गतेऽपि वदनं नीतं परां नम्रता-
मीषन्मां प्रति भेदकारि हसितं नोक्तं वचो निष्ठुरम् ।
अन्तर्बाष्पजडीकृतं प्रभुतया चक्षुर्न विष्फारितं
कोपश्च प्रकटीकृतो दयितया मुक्तश्च न प्रश्रयः ॥”

इति रत्नावली ।

आरण्यके, त्वं कथं जानासि। इदानीं ते शिक्षयामि।
इन्दीवरिके, गृहाणैनाम्।

**विदूषकः**— होदि, अज्ज कोमुदीमहूसवे तुह चित्तं अवहरिदुं वअस्सेण पेक्खणीअं अणुट्ठिदं।

भवति, अद्य कौमुदीमहोत्सवे तव चित्तमपहर्तुं वयस्येन प्रेक्षणीयमनुष्ठितम्।

**वासवदत्ता**— एदं तुह्माणं दुण्णअं पेक्खिअ हासो मे जाअदि।

एतं युष्माकं दुर्नयं प्रेक्ष्य हासो मे जायते।

**राजा**— देवि, अलमन्यथा विकल्पितेन। पश्य।

**भ्रूभङ्गैः क्रियते ललाटशशिनः कस्मात्कलङ्को मुधा**
**वाताकम्पितबन्धुजीवसमतां नीतोऽधरः किं स्फुरन्।**
**मध्यश्चाधिककम्पितस्तनभरेणायं पुनः खिद्यते**
**कोपं मुञ्च तवैव चित्तहरणायैतन्मया क्रीडितम्॥ १४॥**

देवि, प्रसीद प्रसीद। (इति पादयोः पतति।)

---

**भ्रूभङ्गैरिति**। ललाटमेव शशी चन्द्रः तस्य। भ्रूभङ्गैः भ्रुकुटिभिः। कलङ्कः। कस्मात् किमर्थम्। मुधा वृथा। क्रियते। स्फुरन् कोपेन चलन्। अधरः। किं कुतः। वातेन आकम्पितस्य आधूतस्य बन्धुजीवस्य बन्धूककुसुमस्य समतां साम्यम्। नीतः प्रापितः। अधिकं यथा तथा कम्पितयोः स्तनयोः भरः भारः तेन। अयं मध्यः अवलग्नं च। पुनः पुनरपि। खिद्यते खिन्नो भवति। स्तनभरेणैव मध्यस्य खेदः, तत्कम्पनेन तु संप्राति महान् स इति भावः। पुनरिति वाक्यालङ्कारे वा। "रम्भोरु संहर भयं क्षमते विकारगुत्कम्पिनः स्तनतटस्य न मध्यभागः।" इति मालतीमाधवम्। कोपम्। मुञ्च। तव। चित्तहरणाय मनोविनोदनायैव। एतत्। मया। क्रीडितं विहृतम्।

**वासवदत्ता**— हञ्जे, णिवुत्तं पेक्खणअं । ता एहि । अब्भन्तरं एव्व पविसह्म । (इति निष्क्रान्ता ।)

हञ्जे, निवृत्तं प्रेक्षणकम् । तदेहि । अभ्यन्तरमेव प्रविशावः ।

**राजा**— (विलोक्य ।) कथमकृत्वैव प्रसादं गता देवी ।

**स्वेदाम्भःकणभिन्नभीषणतरभ्रूभङ्गमेकं रुषा**
**त्रासेनापरमुत्प्लुतोत्प्लुतमृगव्यालोलनेत्रोत्पलम् ।**
**उत्पश्यन्नहमग्रतो मुखमिदं देव्याः प्रियायास्तथा**
**भीतश्चोत्सुकमानसश्च महति क्षिप्तोऽस्म्यहं संकटे ॥ १५ ॥**

तद्यावदिदानीं शयनीयं गत्वा देव्याः प्रसादनोपायं चिन्तयामि ।

[ इति निष्क्रान्ताः सर्वे ।

## इति तृतीयोऽङ्कः ।

---

कथमकृत्वैव—“ प्रावृण्नदीव अप्रसन्ना गता देवी । ” इति विक्रमोर्वशी ।

**स्वेदेति** । रुषा कोपेन । स्वेदाम्भःकणैः भिन्नं युक्तं, भीषणतरः अतित्रासजनकः भ्रूभङ्गः भ्रुकुटिः यस्य तत् तादृशम् । देव्याः वासवदत्तायाः । मुखं एकम् । तथा । त्रासेन भीत्या । उत्प्लुतोत्प्लुतः भयेन अत्यन्तं धावमानः यः मृगः हरिणः तस्येव व्यालोले तरले नेत्रोत्पले यस्य तत् तादृशम् । प्रियायाः आरण्यकायाः । इदं पुरो भाव्यमानम् । मुखं अपरम् । अहम् । अग्रतः पुरतः । उत्पश्यन् उत्प्रेक्षमाणः भावयन्नित्यर्थः । भीतः त्रस्तश्च । उत्सुकमानसः उत्कण्ठितमनाश्च सन् । महति । संकटे । क्षिप्तः पातितः पतितो वा । अस्मि । **भावशबलता** ॥ १५ ॥

“ इति गर्भनाटकम् । ” इति क्वचित्पाठो दृश्यते ।

**इति तृतीयाङ्कव्याख्या समाप्ता ॥**

## चतुर्थोऽङ्कः ॥

(ततः प्रविशति मनोरमा ।)

**मनोरमा**— (सोद्वेगम् ।) अहो दीहरोसदा देवीए । कहं एत्तिअं कालं बद्धाए पिअसहीए आरण्णिआए उवरि अणुकम्पं ण गेण्हइ । (सास्रम् ।) सा तवस्सिणी अत्तणो बन्धणस्स किळेसेण तह ण संतप्पदि, जह भट्टिणो दंसणणिरासदाए । "ईरिसं च से दुक्खं, जेण अज्ज एव्व अत्ताणं वावादअन्ती मए कहं वि णिवारिदा । एदं उत्तन्तं भट्टिणो निवेदेहि" त्ति वसन्तअं भणिअ आअदह्मि ।

अहो दीर्घरोषता देव्याः । कथमेतावन्तं कालं बद्धायाः प्रियसख्या आरण्यकाया उपर्यनुकम्पां न गृह्णाति । सा तपस्विन्यात्मनो बन्धनस्य क्लेशेन तथा न संतप्यते, यथा भर्तुर्दर्शननिराशतया । "ईदृशं चास्या दुःखम्, येनाद्यैवात्मानं व्यापादयन्ती मया कथमपि निवारिता । एतं वृत्तान्तं भर्त्रे निवेदय" इति वसन्तकं भणित्वागतास्मि ।

(ततः प्रविशति काञ्चनमाला ।)

**काञ्चनमाला**— कहं अण्णेसन्तीए वि मए भअवई सङ्किच्चा-

---

सोद्वेगं सभयं, सदुःखं वा । "उद्वेगः विरहजन्यदुःखम्" इति केचित् । संभ्रम इत्यपरे ।

अणी ण दिट्ठा । (विलोक्य ।) ता एदं वि दाव मणोरमं पुच्छिस्सं । (उपसृत्य ।) मणोरमे, अवि जाणासि कहिं भअवई सङ्किच्चाअणित्ति

कथमन्विष्यन्त्यापि मया भगवती साङ्कृत्यायनी न दृष्टा । तदेतामपि तावन्मनोरमां प्रक्ष्यामि । मनोरमे, अपि जानासि कुत्र भगवती साङ्कृत्यायनीति ।

**मनोरमा**— (विलोक्याश्रूणि प्रमृज्य ।) हला कञ्चणमाले, दिट्ठा । किं उण ताए पओअणं ।

हला काञ्चनमाले, दृष्टा । किं पुनस्तया प्रयोजनम् ।

**काञ्चनमाला**— मणोरमे, अज्ज देवीए अङ्गारवदीए लेहो पेसिदो ।* तस्सिं वाचिदे बप्फपुण्णणअणा दिढं संतप्पिदुं आरद्धा देवी । ता विणोदणणिमित्तं ताए भअवदिं अण्णेसामि ।

मनोरमे, अद्य देव्याङ्गारवत्या लेखः प्रेषितः । तस्मिन्वाचिते बाष्पपूर्णनयना दृढं संतप्तुमारब्धा देवी । तद्विनोदननिमित्तं तस्या भगवतीमन्विष्यामि ।

**मनोरमा**— हला, किं उण तस्सिं लेहे आलिहिदं ।

हला, किं पुनस्तस्मिंल्लेख आलिखितम् ।

**काञ्चनमाला**— "जा मम भइणिआ सा तव जणणी एव्व । ताए भत्ता दिढवम्मा तादो दे । ता तुह किं एदं आअक्खिदव्वं ।

---

* अङ्गारवती वासदत्ताया माता ।

तस्स समहिओ संवच्छरो कलिङ्गहदएण बद्धस्स। ता ण जुत्तं एदं उत्तन्तं अणिट्ठं सुणिअ समीवट्ठिदस्स समत्थस्स भत्तुणो दे एव्वं उदासीणत्तणं ओलम्बिदुं" त्ति ।

या मम भगिनी सा तव जनन्येव। तस्या भर्ता दृढवर्मा तातस्ते। तत्तव किमेतदाख्यातव्यम्। तस्य समधिकः संवत्सरः कलिङ्गहतकेन बद्धस्य। तन्न युक्तमेतं वृत्तान्तमनिष्टं श्रुत्वा समीपस्थितस्य समर्थस्य भर्तुस्ते एवमुदासीनत्वमवलम्बितुम्" इति ।

**मनोरमा**— हला कञ्चणमाले, जदा दाव अअं उत्तन्तो भट्टिणीए ण केण वि वाइदव्वोत्ति भट्टिणा आणत्तं, ता केण उण दाणिं सो लेहो सुणाविदो ।

हला काञ्चनमाले, यदा तावदयं वृत्तान्तो भट्टिन्यै न केनापि वाचयितव्य इति भर्त्राज्ञप्तम्, तत्केन पुनरिदानीं स लेखः श्रावितः ।

**काञ्चनमाला**— अणुवाइअ तुण्हींभूदाए मह हत्थादो गेण्हिअ सअं एव्व भट्टिणीए वाइदो ।

अनुवाच्य तूष्णींभूताया मम हस्ताद्गृहीत्वा स्वयमेव भट्टिन्या वाचितः ।

**मनोरमा**— तेण गच्छ तुमं। एसा क्खु देवी ताए एव्व सह दन्तवलहीए चिट्ठइ ।

तेन गच्छ त्वम्। एषा खलु देवी तयैव सह दन्तवलभ्यां तिष्ठति ।

**काञ्चनमाला**— तेण हि भट्टिणीसआसं गमिस्सं । (इति निष्क्रान्ता ।)

तेन हि भट्टिनीसकाशं गमिष्यामि ।

**मनोरमा**— चिरं खु मे आरण्णिआसआसादो आअदाए । दिढं च णिव्विण्णा सा तवस्सिणी अत्तणो जीविदेण । कदाइ अच्चाहिदं भवे । ता तहिं एव्व गच्छह्मि । (इति निष्क्रान्ता ।)

चिरं खलु मे आरण्यकासकाशादागतायाः । दृढं च निर्विण्णा सा तपस्विन्यात्मनो जीवितेन । कदाचिदत्याहितं भवेत् । तत्तत्रैव गच्छामि ।

## इति प्रवेशकः ।

(ततः प्रविशति सोद्वेगासनस्था वासवदत्ता साङ्कृत्यायनी विभवतश्च परिवारः ।)

**साङ्कृत्यायनी**— राजपुत्रि, अलमुद्वेगेन । नेदृशो वत्सराजः । कथमित्थंगतमपि भवत्या मातृष्वसृपतिं विज्ञाय वत्सराजो निश्चिन्तं स्थास्यति ।

**वासवदत्ता**— (सास्रम् ।) भअवदि, अदिउज्जुआ दाणिं तुमं । जस्स मए ण कज्जं, तस्स ममकेरएण किं कज्जं । अज्जुआए जुत्तं मम एदं आळिहिदुं । सा उण ण आणादि अज्ज तारिसी ण वासवदत्तेत्ति । तुह उण एसो आरण्णिआए उत्तन्तो पच्चक्खो । ता कहं एदं भणासि ।

अत्याहितं महाभीतिः ।

भगवति, अतिऋजुकेदानीं त्वम् । यस्य मया न कार्यम्, तस्य मदीयेन किं कार्यम् । मातुर्युक्तं ममैतदालिखितुम् । सा पुनर्न जानात्यद्य तादृशी न वासवदत्तेति । तव पुनरेष आरण्यकावृत्तान्तः प्रत्यक्षः । तत्कथमेतद्भणासि ।

**साङ्कृत्यायनी**— यत एव मे प्रत्यक्षः, तत एव ब्रवीमि । तेन ननु कौमुदीमहोत्सवे त्वां हासयितुं तथा क्रीडितम् ।

**वासवदत्ता**— भअवदि, एदं एत्थ सच्चं । तह हासिदह्मि, जेण भअवदीए पुरदो लज्जाए कहं वि चिट्ठामि । ता किं तक्केरकाए कहाए । णं एदेण एव्व पक्खवादेण एत्तिअं भूमिं णीदह्मि । (इति रोदिति ।)

भगवति, एतदत्र सत्यम् । तथा हासितास्मि, येन भगवत्याः पुरतो लज्जया कथमपि तिष्ठामि । तत्किं तदी-

अति ऋजुका अत्यन्तं सरला कपटानभिज्ञा । "अज्जूआए" इत्यस्य "मातुः" इति संस्कृतम् । अज्जूशब्दः, अज्जुआशब्दश्च प्रकृते मातृवाचको देश्यः । तथा च शाकुन्तले— "मुञ्च मं । जाव अज्जूए सआसं गमिस्सं ।" "अज्जुए एसो को वि पुरिसो मं पुत्त त्ति आलिङ्गदि ।" इति । तत्र मातृशब्द एव संस्कृतविपरिणामे सर्वत्र कोशेषु समुपलभ्यते । "आर्यायाः" इति संस्कृतविपरिणामस्तु चिन्त्यः । अमरेण तु "नाट्योक्तौ गणिकाज्जुका ।" इत्युक्तम् । तथा च मृच्छकटिकायाम् । "एसा अज्जुआ हिअएण किं वि आलिहन्ती चिट्ठइ ।" इति । एतच्च मतान्तरतया समर्थनीयम् । तादृशी यथा सा मन्यते तथा, यथा पुरा तथा वा "अद्यापि" इति पाठान्तरम् ।

पक्षपातः स्नेहः । "भवन्ति भव्येषु हि पक्षपाताः ।" इति भारविः ।

यया कथया । नन्वेतेनैव पक्षपातेनैतावतीं भूमिं नीतास्मि ।

**साङ्कृत्यायनी**— अलं राजपुत्रि रुदितेन । नेदृशो वत्सराजः । (विलोक्य ।) अथवा प्राप्त एवायम्, यस्ते मन्युप्रमार्जनं करोति ।

**वासवदत्ता**— मणोरहा दाणिं एदे भअवदीए ।

मनोरथा इदानीमेते भगवत्याः ।

(ततः प्रविशति राजा विदूषकश्च ।)

**राजा**— वयस्य, क इदानीमभ्युपायः प्रियां मोचयितुम् ।

**विदूषकः**— भो वअस्स, मुञ्च विसादं । अहं दे उवाअं कहइस्सं ।

भो वयस्य, मुञ्च विषादम् । अहं ते उपायं कथयिष्यामि ।

**राजा**— (सहर्षम्) वयस्य, त्वरिततरमभिधीयताम् ।

**विदूषकः**— भो, तुमं दाव अणेअसमरसंघट्टप्पहावबाहुसाली, पुणो वि अणेअगअतुरअपआइदुव्विसहबळसमुदिदो । ता सव्वबळसंदोहेण अन्तेउरं सुपीडिअं करिअ दाणिं एव्व आरण्णिअं मोचावेहि ।

मन्युः शोकः । मनोरथाः — “मनोरथानामतटाः प्रवाहाः” इति शाकुन्तलम् ।

भोः, त्वं तावदनेकसमरसंघट्टप्रभावबाहुशाली, पुनरप्यनेकगजतुरगपदातिदुर्विषहबलसमुदितः । तत्सर्वबलसंदोहेनान्तःपुरं सुपीडितं कृत्वेदानीमेवारण्यकां मोचय ।

**राजा**— वयस्य, अशक्यमुपदिष्टम् ।

**विदूषकः**— किं एत्थ असक्कं । जदो दाव कुज्जवामणबुड्ढकञ्चुइवज्जिदो मणुस्सो अवरो णत्थि तहिं ।

किमत्राशक्यम् । यतस्तावत्कुब्जवामनवृद्धकञ्चुकिवर्जितो मनुष्योऽपरो नास्ति तत्र ।

**राजा**— (सावज्ञम् ।) मुर्ख, किमसंबद्धं प्रलपसि । देव्याः प्रसादं मुक्त्वा नान्यस्तस्या मोक्षणाभ्युपायः । तत्कथय कथं देवीं प्रसादयामि ।

**विदूषकः**— भो मासोववासं करिअ जीविदं धारेहि । एव्वं देवी चण्डी पसीदिस्सदि ।

भोः, मासोपवासं कृत्वा जीवितं धारय । एवं देवी चण्डी प्रसत्स्यति ।

**राजा**— (विहस्य ।) अलं परिहासेन । कथय कथं देवीं प्रसादयामि ।

**धृष्टः किं पुरतोऽवरुध्य विहसन्गृह्णामि कण्ठे प्रियां**
**किं वा चाटुशतप्रपञ्चरचनाप्रीतां करिष्यामि ताम् ।**

---

अवज्ञा अनादरः । चण्डी कोपना ।

**धृष्ट इति** । (अहम्) धृष्टः निर्लज्जः, मिथ्या प्रगल्भो वा सन् । पुरतः । अवरुध्य रुद्ध्वा । विहसन् सन् । पियां वासवदत्ताम् । कण्ठे । गृह्णामि किम् ।

**किं तिष्ठामि कृताञ्जलिर्निपतितो देव्याः पुरः पादयोः**
**सत्यं सत्यमहो न वेद्म्यनुनयो देव्याः कथं स्यादिति ॥ १ ॥**

तदेहि। देवीसकाशमेव गच्छावः।

**विदूषकः**— भो गच्छ तुमं। अहं उण दाणिं एव्व बन्धणादो कहं वि परिब्भंसिअ आअदोह्मि। ता ण गमिस्सं।

भोः गच्छ त्वम्। अहं पुनरिदानीमेव बन्धनात्कथमपि परिभ्रश्यागतोऽस्मि। तन्न गमिष्यामि।

**राजा**— (विहस्य कण्ठे गृहीत्वा बलान्निवर्तयति।) मूर्ख, आगम्यतामागम्यताम्। (परिक्रम्यावलोक्य च।) इयं देवी दन्तवलभीमध्यमध्यास्ते। यावदुपसर्पामि। (सलज्जमुपसर्पति।)

(वासवदत्ता सखेदमासनादुत्तिष्ठति।)

**राजा**—

**किं मुक्तमासनमलं मयि संभ्रमेण**
**नोत्थातुमित्थमुचितं मम तान्तमध्ये।**

---

वा अथ वा। चाटूनां प्रियवाक्यानां शतस्य प्रपञ्चस्य विस्तरस्य रचनया करणेन। ताम्। प्रीताम्। करिष्यामि किम्। देव्याः। पादयोः। निपतितः सन्। पुरः। कृताञ्जलिः। तिष्ठामि किम्। सत्यं सत्यं मयोच्यमानं परमार्थभूतम्। अहो इति खेदे। देव्याः। अनुनयः सान्त्वनम्। कथं स्यात्, इति। न वेद्मि न जानामि।

दन्तवलभी दन्तपरिकल्पितः शुद्धान्तः सौधोर्ध्ववेश्म वा। "शुद्धान्ते वलभीचन्द्रशाले सौधोर्ध्ववेश्मनि।" इति रभसः।

**किमिति**। आसनम्। किं कुतः। मुक्तम्। मयि मद्विषये। संभ्रमेण उपचारसंभ्रमेण। अलं उपचारसंभ्रमो मद्विषये मास्त्वित्यर्थः। तान्तः कृशत्वात्

दृष्टिप्रसादविधिमात्रहृतो जनोऽय-
मत्यादरेण किमिति क्रियते विलक्षः ॥ २ ॥

**वासवदत्ता**— ( मुखं निरूप्य । ) अज्जउत्त, विलक्खो दाणिं तुमं होसि ।

आर्यपुत्र, विलक्ष इदानीं त्वं भवसि ।

**राजा**— प्रिये सत्यमहं विलक्षः । यत्प्रत्यक्षदृष्टापराधोऽपि भवतीं प्रसादयितुं व्यवसितोऽस्मि ।

**साङ्कृत्यायनी**— ( आसनं निर्दिश्य । ) महाराज क्रियतामासनपरिग्रहः ।

**राजा**— ( आसनं निर्दिश्य । ) इतो देव्युपविशतु ।

( वासवदत्ता भूमावुपविशति । )

**राजा**— आः कथं भूमावुपविष्टा देवी । अहमप्यत्रैवोपविशामि । ( इति भूमावुपविश्य कृताञ्जलिः । ) प्रिये, प्रसीद प्रसीद । किमेवं प्रणतेऽपि मयि गम्भीरतरं कोपमुद्वहसि ।

---

उत्थानक्लेशासहनेन श्रान्तः मध्यः यस्यास्तस्यास्संबुद्धिः हे तान्तमध्ये । इत्थम् । मम मद्विषये । उत्थातुम् । न उचितम् । कुत इत्यत आह— **दृष्टिप्रसादेति** । दृष्टिः दर्शनमेव प्रसादः अनुग्रहः तस्य विधिः करणं तेनैव हृतः वशीकृतः स्वाधीन इत्यर्थः । दृष्टयोः नेत्रयोः प्रसादः कोपारुण्यापनयनेन अकालुष्यमिति वा । अयं जनः अहम् । अत्यादरेण । किमिति कुतः । विलक्षः लज्जावान् क्रियते ।

" प्रसादमाकाङ्क्षति यस्तवोत्सुकः
स किं त्वया दासजनः प्रसाद्यते । "

इति विक्रमोर्वशी ।

भ्रूभङ्गं न करोषि रोदिषि मुहुर्मुग्धेक्षणे केवलं
नातिप्रस्फुरिताधरानवरतं निःश्वासमेवोज्झसि ।
वाचं नापि ददासि तिष्ठसि परं प्रध्याननम्रानना
कोपस्ते स्तिमितो निपीडयति मां गूढप्रहारोपमः ॥ ३ ॥

प्रिये, प्रसीद प्रसीद । ( इति पादयोः पतति । )

**वासवदत्ता**— अदिसुहिदो णं सि । किं दाणिं दुक्खिदं जणं विआरेसि । उट्ठेहि । को एत्थ कुविदो ।

अतिसुखितो नन्वासि । किमिदानीं दुःखितं जनं विकारयासि । उत्तिष्ठ । कोऽत्र कुपितः ।

**साङ्कृत्यायनी**— उत्तिष्ठ । महाराज, किमनेन । अन्यदेव तावदुद्वेगकारणमस्याः ।

**राजा**— (ससंभ्रमम् ।) भगवति, किमन्यत् ।

(साङ्कृत्यायनी कर्णे कथयति ।)

**राजा**— (विहस्य ।) यद्येवमलमुद्वेगेन । मयापि ज्ञातम् । सिद्ध

---

**भ्रूभङ्गमिति** । मुग्धं मनोहरं ईक्षणं दृष्टिः यस्याः तस्याः संबोधनं, हे मुग्धेक्षणे । भ्रूभङ्गं कोपचिह्नभूतां भ्रुकुटिं । न करोषि । मुहुः शश्वत् । केवलं रोदिषि रोदनमात्रं करोषि । नातिप्रस्फुरितः न अत्यन्तं कम्पितः अधरः यस्याः सा तादृशी सती । अनवरतं अविच्छिन्नं यथा तथा । निश्वासं एव । उज्झसि मुञ्चसि । वाचम् । न अपि ददासि । परं किंतु । प्रध्यानेन चिन्तया नम्रं विनतं आननं यस्याः सा तथा सती । तिष्ठसि । अतः, गूढप्रहारोपमः गूढेन प्रहारेण तुल्यः । स्तिमितः निश्चलः रूढ इत्यर्थः, चिह्नविशेषाननुमेय इति वा । ते । कोपः । माम् । निपीडयति ॥ ३ ॥

एवास्मिन्प्रयोजने देवीं दिष्ट्या वर्धयिष्यामीति नोक्तम् । अन्यथा कथमहं दृढवर्मवृत्तान्ते विस्रब्धास्तिष्ठामि । तत्कतिपयान्यहानि तद्वार्ताया आगतायाः । इदं च तत्र वर्तते ।

**अस्मद्बलैर्विजयसेनपुरःसरैस्तै-**
**राक्रान्तबाह्यविषयो विहतप्रतापः ।**
**दुर्गं कलिङ्गहतकः सहसा प्रविश्य**
**प्राकारमात्रशरणोऽशरणः कृतोऽसौ ॥ ४ ॥**

तदवस्थं च तं

**निर्दिष्टाक्रान्तमन्दं प्रतिदिनविरमद्वीरदासेरवृत्तं**
**सध्वंसं शीर्यमाणद्विपतुरगनरक्षीणानिःशेषसैन्यम् ।**

---

दिष्ट्या भाग्येन ।

**अस्मदिति** । विजयसेनः पुरस्सरः प्रधानभूतः येषां तैः तादृशैः । तैः । अस्मद्बलैः अस्मत्सैन्यैः । आक्रान्तः बाह्यः विषयः देशः यस्य स तथा । विहतः ध्वस्तः प्रतापः कोशदण्डजतेजः यस्य स तादृशः । असौ । कलिङ्गहतकः नीचः कलिङ्गः, हतकशब्द उत्तरपदभूतो नीचार्थकः । अशरणः रक्षणोपायरहितः । सहसा झटिति । दुर्गम् । प्रविश्य । तिष्ठन्निति शेषः, तेन ल्यबुपपत्तिः । "महाकविप्रयोगबाहुल्यादसमानकर्तृकत्वेऽपि क्त्वाल्यबादयः" इति घण्टापथे मल्लिनाथः । प्राकार एव शरणं रक्षकं यस्य तादृशः । कृतः । दुर्गप्रवेशे बलानां कर्तृत्वं वा ॥ ४ ॥

**निर्दिष्टेति** । अत्र "तदवस्थं च तम्" इति संबध्यते । हे भगवति । त्वम् । निर्दिष्टेन पूर्वोक्तेन आक्रान्तेन आक्रमणेन मन्दं निस्तेजस्कम्, किंकर्तव्यतामूढं वा । "आक्रान्ति" इति पाठान्तरम् । "निर्दिष्टाक्रन्दमन्दम्" इति पाठे तु निर्दिष्टानां अधिकृतानां आक्रन्देन रोदनेन मन्दमिति व्याख्येयम् । प्रतिदिनं दिने दिने विरमत् ह्रसत् वीराणां योधानां दासेराणां भृत्यानां च वृत्तं युद्धपरिचर्यादिरूपव्यापारः वृत्तिर्वा यस्य तं तथोक्तम् । प्रतिदिनं वीरा दासेराश्च ह्रसन्तीत्यर्थः ।

**अद्य श्वो वा विभग्ने झटिति मम बलैः सर्वतस्तत्र दुर्गे**
**बद्धं युद्धे हतं वा भगवति नचिराच्छ्रोष्यसि त्वं कलिङ्गम् ॥**

**साङ्कृत्यायनी**— राजपुत्रि, प्रथमतरमेव भवत्याः कथितं मया कथमप्रतिविधाय वत्सराजः स्थास्यतीति ।

**वासवदत्ता**— जइ एव्वं पिअं मे ।

यद्येवं प्रियं मे ।

(प्रविश्य प्रतीहारी ।)

**प्रतीहारी**— जेदु जेदु भट्टा । एसो क्खु विअअसेणो दिढवम्मकञ्चुइसहिदो हरिससमुप्फुल्ललोअणो पिअं णिवेदिदुकामो दुवारे चिट्ठइ ।

जयतु जयतु भर्ता । एष खलु विजयसेनो दृढवर्मकञ्चुकिसहितो हर्षसमुत्फुल्ललोचनः प्रियं निवेदयितुकामो द्वारे तिष्ठति ।

**वासवदत्ता**— (सस्मितम् ।) भअवदि, जह तक्केमि परिदोसिदह्मि अज्जउत्तेणेत्ति ।

भगवति, यथा तर्कयामि परितोषितास्म्यार्यपुत्रेणेति ।

सध्वंसं नाशसहितम् । शीर्यमाणं इतस्ततो विच्छिद्यमानं नश्यद्वा द्विपतुरगनरं गजतुरगपदाति यस्य तत् तादृशम्, अत एव क्षीणं श्रान्तं च निःशेषसैन्यं समस्तसैन्यं यस्य तं तादृशम् । तदवस्थं पूर्वश्लोकोक्तदशाविशिष्टम् । तम् । कलिङ्गम् । अद्य । श्वः आगामिनि दिने वा । तत्र । सर्वतः सर्वत्र । दुर्गे । झटिति शीघ्रम् । मम । बलैः सैन्यैः । विभग्ने सति । न चिरात् । युद्धे । बद्धम् । हतं वा । श्रोष्यसि । दासेरेत्यत्र "क्षुद्राभ्यो वा" इति ढक्प्रत्ययः ॥ ५ ॥

**साङ्कृत्यायनी**— वत्सराजपक्षपातिनी खल्वहं न किंचिदपि ब्रवीमि ।

**राजा**— शीघ्रं प्रवेशय तौ ।

**प्रतीहारी**— तह । (इति निष्क्रान्ता ।) तथा ।

(ततः प्रविशति विजयसेनः कञ्चुकी च ।)

**विजयसेनः**— भोः कञ्चुकिन्, अद्य स्वामिपादा द्रष्टव्या इति यत्सत्यमनुपमं कमपि सुखातिशयमनुभवामि ।

**कञ्चुकी**— विजयसेन, अवितथमेतत् । पश्य ।

**सुखनिर्भरोऽन्यथापि स्वामिनमवलोक्य भवति भृत्यजनः ।**
**किं पुनररिबलविघटननिर्व्यूढप्रभुनियोगभरः ॥ ६ ॥**

**उभौ**— (उपसृत्य ।) जयतु जयतु स्वामी ।

(राजा उभावपि परिष्वजते ।)

**कञ्चुकी**— देव, दिष्ट्या वर्धसे ।

**हत्वा कलिङ्गहतकं ह्यस्मत्स्वामी निवेशितो राज्ये ।**
**देवस्य समादेशाद्रिपुजयिना विजयसेनेन ॥ ७ ॥**

**सुखेति** । भृत्यजनः । अन्यथापि स्वाम्यादेशनिर्वाहादिकं विनापि । स्वामिनम् । अवलोक्य । सुखेन निर्भरः संपूर्णः । भवति । अरिबलस्य शत्रुसैन्यस्य विघटनेन विध्वंसनेन निर्व्यूढः समर्थितः प्रभुनियोगभरः स्वाम्यादेशभारः येन स तथोक्तः । भृत्यजनः स्वामिनमवलोक्य सुखनिर्भर इति, किंपुनः किं वक्तव्यम् ।

**हत्वेति** । देवस्य भवतः । समादेशात् नियोगात् । रिपुजयिना । विजयसेनेन । कलिङ्गहतकम् । हत्वा । अस्मत्स्वामी दृढवर्मा । राज्ये । निवेशितो हि प्रतिष्ठापितः खलु ॥ ७ ॥

**वासवदत्ता**— अइ भअवइ, अहिजाणासि एदं कञ्चुइणं ?

अयि भगवति, अभिजानास्येतं कञ्चुकिनम् ?

**साङ्कृत्यायनी**— कथं नाभिजानामि । ननु स एषः, यस्य हस्ते मातृष्वसा ते पत्रिकामनुप्रेषितवती ।

**राजा**— साधु । विजयसेनेन महाव्यापारोऽनुष्ठितः ।

( विजयसेनः पादयोः पतति । )

**राजा**— देवि, दिष्ट्या वर्धसे । प्रतिष्ठितो राज्ये दृढवर्मा ।

**वासवदत्ता**— ( सहर्षम् । ) अणुग्गहिदह्मि ।

अनुगृहीतास्मि ।

**विदूषकः**— ईरिसे अब्भुदए अस्सिं राअउले एदं करणिज्जं । ( राजानं निर्दिश्य वीणावादनं नाटयन् । ) गुरुपूआ । ( आत्मनो यज्ञोपवीतं दर्शयन् । ) बह्मणस्स सक्कारो । ( आरण्यकां सूचयन् । ) सव्वबन्धणमोक्खोत्ति ।

ईदृशेऽभ्युदयेऽस्मिन्राजकुल एतत्करणीयम् । गुरुपूजा । ब्राह्मणस्य सत्कारः । सर्वबन्धनमोक्ष इति ।

**राजा**— ( अपवार्य छोटिकां ददत् । ) साधु वयस्य साधु ।

**विदूषकः**— होदि, कहं तुमं ण किं वि एत्थ समादिससि ।

भवति, कथं त्वं न किमप्यत्र समादिशसि ।

---

सर्वबन्धनमोक्षः— " सोपसर्गं वो नक्षत्रम् । तत्सर्वबन्धनमोक्षः क्रियताम् " इति मालविकाग्निमित्रम् ।

छोटिका तर्जन्यङ्गुष्ठाङ्गुलिध्वनिः ।

**वासवदत्ता**— (साङ्कृत्यायनीमवलोक्य सस्मितम्।) मोइदा क्खु हदासेण आरण्णिआ।

मोचिता खलु हताशेनारण्यका।

**साङ्कृत्यायनी**— किं वा तपस्विन्यानया बद्धया।

**वासवदत्ता**— जह भअवदीए रोअदि।

यथा भगवत्यै रोचते

**साङ्कृत्यायनी**— यद्येवम्, अहमेव गत्वा तां मोचयिष्यामि।

(इति निष्क्रान्ता।)

**कञ्चुकी**— इदमपरं संदिष्टं महाराजेन दृढवर्मणा—"त्वत्प्रसादात्सर्वमेव यथाभिलषितं संपन्नम्। तदेते प्राणास्त्वदीयाः। यथेष्टमिमान्विनियोक्तुं त्वमेव प्रमाणम्।"

(राजा सलज्जमधोमुखस्तिष्ठति।)

**विजयसेनः**— देव, न शक्यमेव देवं प्रति प्रीतिविशेषं दृढवर्मणः कथयितुम्।

**कञ्चुकी**— "यद्यपि तुभ्यं प्रतिपादितायाः प्रियदर्शिकाया अस्मद्दुहितुः परिभ्रंशान्न मे संबन्धो जात इति दुःखमासीत्, तथापि वासवदत्तायाः परिणेत्रापि त्वया तदपनीतमेव।"

**वासवदत्ता**— (सास्रम्।) अज्ज कञ्चुई, कहं मे भइणी परिब्भट्टा।

आर्य कञ्चुकिन्, कथं मे भगिनी परिभ्रष्टा।

**कञ्चुकी**— राजपुत्रि, तस्मिन्कलिङ्गहतकावस्कन्दे विद्रुतेष्वितस्ततोऽन्तःपुरजनेषु दिष्ट्या दृष्टाम् "इदानीं न युक्तमत्र स्थातुम्" इति तामहं गृहीत्वा वत्सराजान्तिकं प्रस्थितः । ततः संचिन्त्य तां विन्ध्यकेतोर्हस्ते निक्षिप्य निर्गतोऽस्मि । यावत्प्रतीपमागच्छामि तावत्तैरपि तत्स्थानं सह विन्ध्यकेतुना स्मर्तव्यतां नीतम् ।

**राजा**— (सस्मितम् ।) विजयसेन, किं कथयसि ।

**कञ्चुकी**— तत्र चान्विष्यता मया न प्राप्ता । तदाप्रभृति नाद्यापि विज्ञायते क्व वर्तत इति ।

(प्रविश्य मनोरमा ।)

**मनोरमा**— भट्टिणि, पाणसंसए वट्टइ सा तवस्सिणी ।

भट्टिनि, प्राणसंशये वर्तते सा तपस्विनी ।

**वासवदत्ता**— (सास्रम् ।) किं उण तुमं पिअदंसणाउत्तन्तं जाणासि ।

किं पुनस्त्वं प्रियदर्शनावृत्तान्तं जानासि ।

**मनोरमा**— ण हु अहं पिअदंसणाउत्तन्तं जाणामि । एसा क्खु आरण्णिआ कलुव्ववदेसेण आणीदं विसं पाइअ पाणसंसए वट्टदित्ति एव्वं मए णिवेदिदं । ता परित्ताअदु भट्टिणी । (रुदती पादयोः पतति ।)

---

प्रतीपं आगच्छामि प्रतिनिवर्ते ।

न खल्वहं प्रियदर्शनावृत्तान्तं जानामि । एषा खल्वारण्यका कल्याव्यपदेशेनानीतं विषं पीत्वा प्राणसंशये वर्तत इत्येवं मया निवेदितम् । तत्परित्रायतां भट्टिनी ।

**वासवदत्ता**— (स्वगतम् ।) हद्धि हद्धि । पिअदंसणादुक्खं वि मे अन्तरिदं आरण्णिआउत्तन्तेण । अदिदुज्जणो क्खु लोओ। कदाइ मं अण्णहा संभावइस्सदि । ता एदं एत्थ जुत्तं । (प्रकाशं ससंभ्रमम् ।) मणोरमे, लहु इह एव्व आणेहि तं । णाअलोआदो गहिदविसविज्जो अज्जउत्तो एत्थ कुसलो ।

हा धिक् हा धिक् । प्रियदर्शनादुःखमपि मेऽन्तरितमारण्यकावृत्तान्तेन । अतिदुर्जनः खलु लोकः । कदाचिन्मामन्यथा संभावयिष्यति । तदेतदत्र युक्तम् । मनोरमे, लघ्विहैवानय ताम् । नागलोकाद्गृहीतविषविद्य आर्यपुत्रोऽत्र कुशलः ।

(निष्क्रान्ता मनोरमा । ततः प्रविशति मनोरमया धृता सविषवेगमात्मानं नाटयन्त्यारण्यका ।)

**आरण्यका**— हला मणोरमे, कीस दाणिं मं अन्धआरं पवेसेसि ।

हला मनोरमे, कस्मादिदानीं मामन्धकारं प्रवेशयसि ।

**मनोरमा**— (सविषादम् ।) हद्धि हद्धि । दिट्ठि वि से संकन्ता विसेणेव्व । (वासवदत्तां दृष्ट्वा ।) भट्टिणि, लहु परित्ताएहि । लहु परित्ताएहि । गुरुईभूदं से विसं ।

---

कल्या मद्यम् । " कल्यं प्रभाते क्लीबं स्यात्.........मद्ये तु योषिति ।" इति मेदिनी ।

हा धिक् हा धिक् । दृष्टिरप्यस्याः संक्रान्ता विषेणैव । भट्टिनि, लघु परित्रायस्व लघु परित्रायस्व । गुरूभूतमस्या विषम् ।

**वासवदत्ता**— (ससंभ्रमं राजानं हस्ते गृहीत्वा ।) अज्जउत्त, उट्ठेहि उट्ठेहि । लहु विवज्जइ क्खु एसा तवस्सिणी । (सर्वे पश्यन्ति ।)

आर्यपुत्र, उत्तिष्ठोत्तिष्ठ । लघु विपद्यते खल्वेषा तपस्विनी ।

**कञ्चुकी**— (विलोक्य ।) सुसदृशी खल्वियं मम राजपुत्र्याः प्रियदर्शनायाः । (वासवदत्तां निर्दिश्य ।) राजपुत्रि, कुत इयं कन्यका ।

**वासवदत्ता**— अज्ज, विञ्झकेउणो दुहिदा । तं वावादिअ विअसेणेण आणीदा ।

आर्य, विन्ध्यकेतोर्दुहिता । तं व्यापाद्य विजयसेनेनानीता ।

**कञ्चुकी**— कुतस्तस्य दुहिता । सैवेयं मम राजपुत्री । हा हतोऽस्मि मन्दभाग्यः । (इति निपत्य भूमावुत्थाय ।) राजपुत्रि, इयं सा प्रियदर्शिका भगिनी ते ।

**वासवदत्ता**— अज्जउत्त, परित्ताएहि परित्ताएहि । मम भइणी विवज्जइ ।

आर्यपुत्र, परित्रायस्व परित्रायस्व । मम भगिनी विपद्यते ।

**राजा**— समाश्वसिहि समाश्वसिहि । पश्यामस्तावत् । (स्वगतम् ।) कष्टं भोः कष्टम् ।

**संजातसान्द्रमकरन्दरसां क्रमेण**
**पातुं गतश्च कलिकां कमलस्य भृङ्गः ।**
**दग्धा निपत्य सहसैव हिमेन चैषा**
**वामे विधौ न हि फलन्त्यभिवाञ्छितानि ॥ ८ ॥**

(प्रकाशम् ।) मनोरमे, पृच्छ्यतां तावत्किं ते बोध इति ।

**मनोरमा**— सहि, किं दे बोधो। (सास्रं पुनश्चालयन्ती ।) सहि, णं भणामि किं दे बोधोत्ति ।

सखि, किं ते बोधः। सखि, ननु भणामि किं ते बोध इति ।

**प्रियदर्शिका**— (अविस्पष्टम् ।) णं एदाए वि ण्ग मए महाराओ दिट्टो (इत्यर्धोक्ते भूमौ पतति ।)

नन्वेतयापि न मया महाराजो दृष्टः ।

**संजातेति** । भृङ्गः । संजातः सान्द्रः निबिडः मकरन्दरसः यस्यास्तां तथोक्ताम् । कमलस्य । कलिकां मुकुलम् । क्रमेण । पातुं आस्वादयितुम् । गतः । एषा कमलकलिका च । हिमेन । सहसा झटित्येव । निपत्य । दग्धा शोषिता । विधौ दैवे । वामे प्रतिकूले सति । अभिवाञ्छितानि मनोरथाः । न फलन्ति हि न संपद्यन्ते खलु । चकारद्वयमुभयोः समकालिकतां द्योतयति । **विषादनाप्रस्तुतप्रशंसार्थान्तरन्यासाः** ।

"रात्रिर्गमिष्यति भविष्यति सुप्रभातं
भास्वानुदेष्यति हसिष्यति पद्मिनी च ।
एवं विचिन्तयति कोशगते द्विरेफे
हा हन्त हन्त नलिनीं गज उज्जहार ॥"

**राजा**— (सास्रं स्वगतम् ।)

**एषा मीलयतीदमीक्षणयुगं जाता ममान्धा दिशः**
**कण्ठोऽस्याः प्रतिरुध्यते मम गिरो निर्यान्ति कृच्छ्रादिमाः ।**
**एतस्याः श्वसितं हृतं मम तनुर्निश्चेष्टतामागता**
**मन्येऽस्या विषवेग एव हि परं सर्वं तु दुःखं मम ॥ ९ ॥**

**वासवदत्ता**— (सास्रम् ।) पिअदंसणे, उट्ठेहि उट्ठेहि । पेक्ख एसो महाराओ चिट्ठइ । कहं वेअणा वि से णट्ठा । किं दाणिं मए अवरज्झं अआणन्तीए, जेण कुविदा णालवसि । ता पसीद पसीद । उट्ठेहि उट्ठेहि । ण हु पुणो अवरज्झिस्सं । (ऊर्ध्वमवलोक्य ।) हा देव्वहदअ, किं दाणिं मए अवकिदं, जेण एदावत्थं गदा मे भइणी आदंसिदा । (प्रियदर्शिकाया उपरि पतति ।)

प्रियदर्शने, उत्तिष्ठोत्तिष्ठ । पश्यैष महाराजस्तिष्ठति । कथं वेदनाप्यस्या नष्टा । किमिदानीं मयापराद्धमजा-

---

**एषेति** । एषा प्रियदर्शिका । इदम् । ईक्षणयुगं नेत्रद्वयम् । मीलयति । दिशः । मम । अन्धाः अन्धयन्तीत्यन्धाः निष्प्रकाशाः । जाताः । अस्याः । कण्ठः । प्रतिरुध्यते प्रतिरोधं प्राप्नोति, स्तम्भितबाष्पवृत्तिकलुष इत्यर्थः । गिरः । कृच्छ्रात् कष्टतः, अतियत्नेनेत्यर्थः । निर्यान्ति प्रवर्तन्ते । एतस्याः । श्वसितं निश्वासः । हृतम् । मम । तनुः शरीरम् । निश्चेष्टतां चेष्टाशून्यत्वम् । आगता । अस्याः । विषवेगः एव हि परं केवलविषप्रसर एव । एव हि परमिति पदसमुदायोऽवधारणासूचकः । मम तु । तुशब्दस्ततो व्यावृत्तिपरः । सर्वं दुःखं विषवेगजन्या सकलापि वेदना ममैवेत्यर्थः । इति, मन्ये । **असंगतिरलङ्कारः** ॥ ९ ॥

वेदना चेतना ।

नन्त्या, येन कुपिता नालपसि । तत्प्रसीद प्रसीद । उत्तिष्ठोत्तिष्ठ । न खलु पुनरपरात्स्यामि । हा दैवहतक, किमिदानीं मयापकृतम्, येनैतदवस्थां गता मे भगिन्यादर्शिता ।

**विदूषकः**— भो वअस्स, कहं तुमं मूढो विअ चिट्ठसि । ण एसो विसादस्स कालो । विसमा क्खु गई विसस्स । ता दंसेहि अप्पणो विज्जापहावं ।

भो वयस्य, कथं त्वं मूढ इव तिष्ठसि । नैष विषादस्य कालः । विषमा खलु गतिर्विषस्य । तद्दर्शयात्मनो विद्याप्रभावम् ।

**राजा**— सत्यमेवैतत् । ( प्रियदर्शिकामालोक्य । ) मूढ एवाहमेतावतीं वेलाम् । तदहमेनां जीवयामि । सलिलं सलिलम् ।

**विदूषकः**— ( निष्क्रम्य पुनः प्रविश्य । ) भो, एदं सलिलम् ।

भोः, एतत्सलिलम् ।

( राजोपसृत्य प्रियदर्शनाया उपरि हस्तं निधाय मन्त्रस्मरणं नाटयति । प्रियदर्शिका शनैरुत्तिष्ठति । )

**वासवदत्ता**— अज्जउत्त, दिट्ठिआ पच्चुज्जीविदा मे भइणी ।

आर्यपुत्र, दिष्ट्या प्रत्युज्जीविता मे भगिनी ।

**विजयसेनः**— अहो देवस्य विद्याप्रभावः ।

**कञ्चुकी**— अहो सर्वत्राप्रतिहता नरेन्द्रता देवस्य ।

---

विषमा कष्टा ।

नरेन्द्रः राजा, विषवैद्यश्च । " नरेन्द्रो वार्तिके राज्ञि विषवैद्ये च कथ्यते " इति विश्वः ।

**प्रियदर्शिका**— ( शनैरुत्थायोपविश्य च जृम्भिकां नाटयन्ती सविषादम-विस्पष्टम् । ) मणोरमे, चिरं खु सुत्तह्मि ।

मनोरमे, चिरं खलु सुप्तास्मि ।

**विदूषकः**— भो वअस्स, णिव्वूढं दे वोदित्तणं ।

भो वयस्य, निर्व्यूढं ते वैद्यत्वम् ।

( प्रियदर्शिका साभिलाषं राजानं निरूप्य सलज्जं किंचिदधोमुखी तिष्ठति । )

**वासवदत्ता**— ( सहर्षम् । ) अज्जउत्त, किं दाणिं वि एसा अण्णहेव्व करेदि ।

आर्यपुत्र, किमिदानीमप्येषान्यथैव करोति ।

**राजा**— ( सस्मितम् । )

**स्वभावस्था दृष्टिर्न भवति गिरो नातिविशदा-**
**स्तनुः सीदत्येषा प्रकटपुलकस्वेदकणिका ।**
**यथा चायं कम्पः स्तनभरपरिक्लेशजनन-**
**स्तथा नाद्याप्यस्या नियतमखिलं शाम्यति विषम् ॥ १० ॥**

सस्मितं— विषवेगस्तु विश्रान्तः । परं तु सर्वमिदं सात्विकभावविलसितमिति स्मितोदय इति बोध्यम् ।

**स्वभावेति** । यथा यतः । दृष्टिः । स्वभावे प्रकृतौ तिष्ठतीति स्वभावस्था । न भवति । गिरः वाचः । नातिविशदाः नात्यन्तं स्फुटाः । " गिरा नातिविशदा " इति पाठे तु वाचा निशेत्यादाविव भागुरिमतेन टाबिति ज्ञेयम् । प्रकटाः स्पष्टं लक्ष्यमाणाः पुलकाः रोमाञ्चाः स्वेदकणिकाश्च यस्यां सा तथोक्ता । एषा । तनुः शरीरम् । सीदति श्रान्ता भवति । अयम् । कम्पश्च । स्थनभरस्य परिक्लेशजननः । तथा ततः । अद्यापि । अस्याः । अखिलम् । विषम् । न शाम्यति । नियतं निश्चितम् ॥ १० ॥

**कञ्चुकी**— (प्रियदर्शिकां निर्दिश्य।) राजपुत्रि, एष ते पितुराज्ञाकरः। (इति पादयोः पतति।)

**प्रियदर्शिका**— (विलोक्य।) कहं कञ्चुई अज्जविणअवसू। (सास्रम्।) हा ताद, हा अज्जूए।

कथं कञ्चुक्यार्यविनयवसुः। हा तात, हा मातः।

**कञ्चुकी**— राजपुत्रि, अलं रुदितेन। कुशलिनौ ते पितरौ। वत्सराजप्रभावात्पुनस्तदवस्थमेव राज्यम्।

**वासवदत्ता**— (सास्रम्।) एहि अलिअसीळे। दाणिं त्रि दे भइणिआसिणेहं दंसेहि। (कण्ठे गृहीत्वा।) दाणिं समस्सत्तम्हि।

एह्यलीकशीले। इदानीमपि ते भगिनीस्नेहं दर्शय। इदानीं समाश्वस्तास्मि।

**विदूषकः**— होदि, तुमं भइणिं गेह्णिअ कण्ठे एव्वं परितुट्ठासि। वोदिअस्स पारिदोसिअं विसुमरिदं।

भवति, त्वं भगिनीं गृहीत्वा कण्ठ एवं परितुष्टासि। वैद्यस्य पारितोषिकं विस्मृतम्।

**वासवदत्ता**— वसन्तअ, ण विसुमरिदं।

वसन्तक, न विस्मृतम्।

**विदूषकः**— (राजानं निर्दिश्य सस्मितम्।) वोदिअ, पसारेहि हत्थं। भइणीए अग्गहत्थं दे पारिदोसिअं दाविस्सं।

वैद्य, प्रसारय हस्तम्। भगिन्या अग्रहस्तं ते पारितोषिकं दापयिष्यामि।

(राजा हस्तं प्रसारयति । वासवदत्ता प्रियदर्शिकाहस्तमर्पयति ।)

**राजा**— (हस्तमुपसंहृत्य ।) किमनया । संप्रत्येव कथमपि प्रसादितासि ।

**वासवदत्ता**— को तुमं अगेण्हिदुं । पुढमं एव्व तादेण इअं दिण्णा ।

कस्त्वमग्रहीतुम् । प्रथममेव तातेनेयं दत्ता ।

**विदूषकः**— भो, माणणीआ क्खु देवी । मा से पडिऊलं करेहि ।

भोः, माननीया खलु देवी । मास्याः प्रतिकूलं कुरु ।

(वासवदत्ता राज्ञो हस्तं बलादाकृष्य प्रियदर्शिकामर्पयति ।)

**राजा**— (सस्मितम् ।) देवी प्रभवति । कुतोऽस्माकमन्यथा कर्तुं विभवः ।

**वासवदत्ता**— अज्जउत्त, अदो वि परं किं दे पिअं करीअदु ।

आर्यपुत्र, अतोऽपि परं किं ते प्रियं क्रियताम् ।

**राजा**— किमतः परं प्रियम् । पश्य ।

**निःशेषं दृढवर्मणा पुनरपि स्वं राज्यमध्यासितं**
**त्वं कोपेन सुदूरमप्यपहृता सद्यः प्रसन्ना मम ।**
**जीवन्ती प्रियदर्शना च भगिनी भूयस्त्वया संगता**
**किं तत्स्यादपरं प्रियं प्रियतमे यत्साम्प्रतं प्रार्थ्यते ॥ ११ ॥**

---

**निःशेषमिति** । दृढवर्मणा । पुनरपि । स्वम् । निःशेषं समस्तम् । राज्यम् । अध्यासितं अधिष्ठितम् । कोपेन । सुदूरम् । अपहृता । त्वमपि । सद्यः । मम । प्रसन्ना । भगिनी । प्रियदर्शना च । जीवन्ती सती । त्वया । भूयः

तथापीदमस्तु ।

( भरतवाक्यम् । )

**उर्वीमुद्दामसस्यां जनयतु विसृजन्वासवो वृष्टिमिष्टा-**
**मिष्टैस्त्रैविष्टपानां विदधतु विधिवत्प्रीणनं विप्रमुख्याः ।**
**आकल्पान्तं च भूयात्स्थिरसमुपचिता संगतिः सज्जनानां**
**निःशेषं यान्तु शान्तिं पिशुनजनगिरो दुःसहा वज्रलेपाः ॥**

[इति निष्क्रान्ताः सर्वे ।

## इति चतुर्थोऽङ्कः ।

### समाप्तेयं प्रियदर्शिका नाम नाटिका ।

पुनरपि । संगता । अपरं प्रियं तत् । किं स्यात् । हे प्रियतमे । यत् प्रियम् । साम्प्रतं इदानीम् । प्रार्थ्यते अपेक्ष्यते ॥ ११ ॥

भरतवाक्यं नटवचनम् । निर्व्यूढस्वकृत्येन नटेन वक्तव्यं प्रशस्त्याख्यं निर्वहणसन्धेरङ्गम् । " प्रशस्तिः शुभशंसनम् । " इति तल्लक्षणम् ।

**उर्वीमिति ।** वासवः इन्द्रः । इष्टां अनुकूलाम् । वृष्टिम् । विसृजन् ददत्सन् । उर्वी भूमिम् । उद्दामानि अभिवृद्धानि सस्यानि यस्यां तां तथोक्ताम् । जनयतु करोतु । विप्रमुख्याः ब्राह्मणश्रेष्ठाः । त्रैविष्टपानां देवानाम् । इष्टैः यागैः । यजेः क्तः । विधिवत् यथाशास्त्रम् । " तदर्हम् " इति वतिः । प्रीणनं तृप्तिम् । विदधतु कुर्वन्तु । सज्जनानां साधूनां । संगतिः सौहार्दं च । आकल्पान्तं कल्पावसानपर्यन्तम् । स्थिरा, समुपचिता उत्तरोत्तराभिवृद्धियुक्ता च । भूयात् । दुःसहाः सोढुमशक्याः । वज्रं गुडमाषादिसाधितः सुधाविशेषः । तस्येव लेपो यासां तास्तथोक्ताः, दुर्भेदा इत्यर्थः । पिशुनजनानां सूचकानां रन्ध्रान्वेषिणां दुर्जनानां गिरः । निःशेषं सामस्त्येन । शान्तिम् । यान्तु ॥ १२ ॥

**इति चतुर्थाङ्कव्याख्या समाप्ता ॥**



# ALPHABETICAL INDEX OF VERSES.